*Published with the Sanction of the University of Bombay*

# THE ŚRAUTA READER

( Appointed as a Text for Paper III of the Sanskrit Honours B A. Examination of 1929 and 1930 )



EDITED BY

**A. B Gajendragadkar,**

*Professor of Sanskrit,*
*Elphinstone College, Bombay*

AND

**R. D. Karmarkar,**

*Professor of Sanskrit,*
*New Poona College, Poona*

1928

Price Rupees three annas eight.

# PREFACE



The University of Bombay appointed this Śrauta Reader as a Text for Paper III of the Sanskrit Honours B A. examination of 1929 and 1930. The Reader contains 66 extracts taken from 25 different works some of which are not easily available The Board of Studies in Sanskrit feared that nobody would come forward to edit this book on his own initiative. Nor was it likely that any Publisher would take it up, as the Reader was sure to have a very limited sale. The Board therefore requested the Syndicate to make arrangements for the publication of this book in the interest of students reading for Honours in Sanskrit Thereupon at the suggestion of Principal Hamill I undertook to edit the book in collaboration with my friend Professor R D. Karmarkar, the Syndicate having agreed to pay us a substantial sum towards the cost of printing.

We found that it was no easy task to collect together these 66 passages scattered over such an extensive field of literature. We have tried our best to give the student an accurately and intelligently edited text. Our only reward for this labour of love is the consolation that we have been of some service to the students who otherwise would have found it absolutely impossible to study these various passages from twenty-five different books

Elphinstone College,
Bombay,
10th June 1928.



A. B Gajendragadkar

## CONTENTS

| Number and Name of the Extract | Number of the Page on which the Extract begins |
|---|---|

The Srauta *Reader* has been appointed as a text for B A Honours Sanskrit Paper VI of the examination of 1933, 1934 and 1935 The following selections only from the table of contents in this book have to be studied for the years specified

**1933 and 1934**

(1), (1 A to C)
(2), (2A), (2B)
(3), (3 A)
(4), (4A) (4B)
(5),
(6), (6A), (6C to E)
(7), (7A),(7 B)
(8), (8B), (8D) (8E), *(8G to I)*, (8K)
(9) (9A to F)
(10)
(11)
(12)
(13) (13A)
(14) (14A–B)
(16)
(17)
(18) (18A)
(20)
(22), (22A)
(23), (23A)
(24)
(25)

**1935**

(1), (1 A to C)
(4), (4A and B)
(6), (6A)(6C toE)
(8), (8B), (8D), (8E) *(8G to I)*, (8K)
(9), (9A to F)
(12)
(13) (13A)
(14) (14 A–B)
(18) (18 A)
(20)
(24)
(25)

# Śrauta Reader.

## No. 1

Taittirīyasaṃhitā I. v. 9

अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह ॥ ३७ ॥

रात्रिं प्राविशन्ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निँ स्तवाम स नस्स्तुतः पशून्पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यस्स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्ते देवाः पशून् वित्त्वा कामाँ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान्भवति ॥ ३८ ॥

आदित्यो वा अस्माल्लोकादमुं लोकमैत्सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत्स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकस्सोऽमन्यतेममेवाग्निँ स्तवानि स मा स्तुतस्सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत्स एनँ स्तुतस्सुवर्गं लोकमगमयद्य ॥ ३९ ॥

एवं विद्वानग्निमुपतिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेति ॥

## No. 1 A

Taittirīyasaṃhitā II. iv. 1

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाँसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाँसि रात्रीभिरसुभ्नन्तान्त्सुब्धान्मृतानभि व्यौच्छन्ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाँसि वा इमं घ्नन्तीति ते रक्षाँस्युपामन्त्रयन्त तान्यब्रुवन्वरं वृणामहै यत् ॥ १ ॥

असुराञ्जयाम तन्नस्सहासदिति ततो वै देवा असुरानजयन्तेऽसुराञ्जित्वा रक्षाँस्यपानुदन्त तानि रक्षाँस्यनृतमकर्तेति समन्तं

देवान्पर्यविशन्ते देवा अमावर्नाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं
९ निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव
पुरस्ताद्रक्षाꣳसि ॥ २ ॥

आसन्तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्या-
१२ सन्तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन्तानि
तेनापानुदन्त ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान
एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते ॥ ३॥

१५ अग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रे-
यान्भ्रातृव्यस्तं तेन प्रणुदते यदग्नये विबाधवते य एवैनेन सदृङ् तेन
वि बाधते यदग्नये प्रतीकवते य एवास्मात्पापीयान्तं तेनाप नुदते
१८ प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं
विद्वानेतयेष्ट्या यजते ॥ ४ ॥

## No. 1 B.

Taittirīyasaṃhitā II iv 12.

त्वष्टा हतपुत्रो वीन्द्रꣳसोममाऽहरत्तस्मिन्निन्द्र उपहवमैच्छत तं
नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्तस्य
यदत्यशिष्यत तत्त्वष्टाऽऽहवनीयमुप प्रावर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति स या-
वदूर्ध्वः पराविध्यति तावति स्वयमेव व्यरमत यदि वा तावत्प्रवणम् ॥ ३६॥

आसीद्यदि वा तावदध्युपरासीत्स संभवन्नग्नीषोमावभि समभवत्स
६ इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद्यदिमाँल्लोकान-
वृणोत्तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रम-
सिञ्चत्तपो वै स वज्र आसीत्तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुः ॥ ३७॥

९ अन्या देवताऽऽसीत्सोऽब्रवीद्विष्णवेहीदमा हरिष्यावो येनायमिदमिति
स विष्णुस्त्रेधाऽऽत्मानं वि न्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि

तृतीयमभिपर्यावर्ताद्व्यबिभेयत्पृथिव्या तृतीयमासीत्तेनेन्द्रो वज्रमुदय-
च्छद्विष्णवनुस्थितस्सोऽब्रवीन्मा मे प्र हारस्ति वा इदम् ॥ ३८ ॥ १२

मयि वीर्यं तत्ते प्र दास्यामीति तदस्मै प्रायच्छत्तत्प्रत्यगृह्णादधा मेति
तद्विष्णवेऽति प्रायच्छत्तद्विष्णु प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति
यदन्तरिक्षे तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितस्सोऽब्रवीन्मा १५
मे प्र हारस्ति वा इदम् ॥ ३९ ॥

मयि वीर्यं तत्ते प्र दास्यामीति तदस्मै प्रायच्छत्तत्प्रत्यगृह्णाद्विर्माऽधा
इति तद्विष्णवेऽति प्रायच्छत्तद्विष्णु प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति १८
यद्दिवि तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितस्सोऽब्रवीन्मा मे
प्र हार्येनाहम् ॥ ४० ॥

इदमस्मि तत्ते प्र दास्यामीति त्वी३इत्यब्रवीत्सधा तु स २१
दधावहै त्वामेव प्र विशानीति । यन्मा प्र विशे किं मा भुञ्ज्या
इत्यब्रवीत्त्वामेवेन्धीय तव भोगाय त्वा प्र विशेयमित्यब्रवीत्त वृत्र प्रा-
विशदुदर वै वृत्र क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो य ॥ ४१ ॥ २४

एव वेद हन्ति क्षुध भ्रातृव्य तदस्मै प्रायच्छत्तत्प्रत्यगृह्णात्त्रिर्माऽधा इति
तद्विष्णवेऽति प्रायच्छत्तद्विष्णु प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति
यत्त्रि प्रायच्छत्त्रि प्रत्यगृह्णात्तत्त्रिधातोस्त्रिधातुत्व यद्विष्णुरन्वातिष्ठत २७
विष्णवेऽति प्रायच्छत्तस्मादैन्द्रावैष्णव हविर्भवति यद्वा इद किं च
तदस्मै तत्प्रायच्छदृचस्सामानि यजूꣳषि सहस्र वा अस्मै तत्प्रायच्छ-
त्तस्मात्सहस्रदक्षिणम् ॥ ४२ ॥ ३०

---

## No 1 C

Taittiriyasamhitā II v 11

वाक्च मनश्चाऽऽर्तीयेतामह देवेभ्यो हव्य वहामीति वागब्रवीदह
देवेभ्य इति मनस्तौ प्रजापतिं प्रश्नमैताꣳ सोऽब्रवीत् ॥ ६४ ॥

३ प्रजापतिर्दूतीरेव त्व मनसोऽसि यद्वि मनसा ध्यायति तद्वाचा वदतीति तत्खलु तुभ्य न वाचा जुहवन्नित्यब्रवीत्तस्मान्मनसा प्रजापतये जुव्हाति मन इव हि प्रजापति. प्रजापतेराप्त्यै ॥

---

## No 1 D

Taittirīyasamhitā VI ii 4

सुवर्ग वा एते लोक यन्ति य उपसद उपयन्ति तेषा य उन्नयते हीयत एव स नोदनेषीति सून्नीयमिव यो वै स्वार्थेतां यता श्रान्तो ३ हीयत उत स निष्याय सह वसति तस्मात्सकृदुन्नीय नापरमुन्नयेत दध्नोन्नयेतैतद्वै पशूना रूप रूपेणैव पशूनव रुन्धे ॥ २० ॥

यज्ञो देवेभ्यो निलायत विष्णू रूप कृत्वा स पृथिवी प्राविशत्त देवा ६ हस्तान्त्सरभ्यैच्छन्तमिन्द्र उपर्युपर्यत्यक्रामत्सोऽब्रवीत्को माऽयमुपर्युपर्यत्यक्रमीदित्यह दुर्गे हन्तेत्यथ कस्त्वमित्यह दुर्गादाहर्तेति सोऽब्रवीद्दुर्गे वै हन्ताऽवोचथा वराहोऽय वाममोष ॥ २१ ॥

९ सप्ताना गिरीणा परस्ताद्वित्त वेद्यमसुराणा बिभर्ति त जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन्भित्वा तमहन्त्सोऽब्रवीद्दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति तमेभ्यो यज्ञ एव यज्ञमाऽहरद्यत्तद्वित्त १२ वेद्यमसुराणामविन्दन्त तदेक वेद्यै वेदित्वमसुराणाम् ॥ २२ ॥

वा इयमग्र आसीद्यावदासीन. परापश्यति तावद्देवाना ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदिय सलावृकी १५ त्रि. परिक्रामति तावन्नो दत्तेति स इन्द्रस्सलावृकी रूप कृत्वेमा त्रिस्सर्वत. पर्यक्रामत्तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वम् ॥ २३ ॥

सा वा इय सर्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते १८ त्रिंशत्पदानि पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशति. पुरस्तात्तिरश्ची दशदश स पद्यन्ते दशाक्षरा विराडन्न विराड्विराजैवान्नाद्यमव

रुन्धु उद्धन्ति यदेवास्या अमेध्य तदप हन्त्युद्धन्ति तस्मादोषधयः
परा भवन्ति बर्हिस्तृणाति तस्मादोषधयः पुनरा भवन्त्युत्तरं बर्हिष २१
उत्तरबर्हिस्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवायज-
मानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः ॥ २४ ॥

## No. 2 —

Maitrayanisamhita II. 4 1.

विश्वरूपो वै त्वाष्ट्र आसीत्त्रिशीर्षासुराणां स्वस्रीयः । स सोममेकेन
शीर्ष्णापिबत्सुरामेकेनान्नमेकेनावयत्तं इन्द्रोऽमन्यतायं वा इदं भविष्य-
तीति । तेन समलभत तेन युगशरमपतत्तं तक्षाणं तिष्ठन्तमब्रवीदाधावे- ३
मान्यस्य शीर्षाणि छिन्द्धीति । तस्य तक्षोपस्कन्द्य परशुना शीर्षाण्यछिन-
त्तस्मात्तस्मे शिरो धृतं तस्मादस्यान्नमन्नाद्य । तस्य यत्सोमपं शिर
आसीत्स कपिञ्जलोऽभवद्यत्सुरापं स कलविङ्को येनान्नमावयत्स तित्तिरिः
स वै त्वष्टा पुत्रे हते सोममाहरत्तं इन्द्रं तमपः
शतंशलेऽसुनोदेथो आहुः सहस्रशला इति । तस्मिन्वा इन्द्र
उपहवमैच्छत तन्नोपाह्वयत । तं प्रासहादाय नाड्या निरपिबत्स सोम- ९
पीथेन व्यार्ध्यत । तस्मात्सोमो नानुपहूतेन पेयः सोमपीथेन ह व्यृद्धको
भवति । यदितोऽमुच्यत तौ सिंहावभवतां यदितस्तौ व्याघ्रौ
यदितस्तौ वृकौ । यत्प्रथमं निरष्टीवत्तत्कुवलमभवद्यद्द्वितीयं तद्बदरं १२
यत्तृतीयं तत्कर्कन्धुर्यदधस्तात्सा सुरा । तं वा एतयाश्विना अया-
जयतां सौत्रामण्या । स यैरेव तदिन्द्रियैर्वीर्यैर्व्यार्ध्यत तान्यस्मिन्ना-
प्त्वाधत्ताम् । सोमेनातिपुपुवानं याजयेदिन्द्रियेण वा एष वीर्येण १५
व्यृध्यते यं सोमोऽतिपवते । यावदेवेन्द्रियं वीर्यं तदस्मिन्नाप्त्वा दधाति ।
राजसूयेनाभिषिषिचानं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते
यो राजसूयेनाभिषिञ्चते । यावदेवेन्द्रियं वीर्यं तदस्मिन्नाप्त्वा १८
दधाति । भूतिकामं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते

योऽल भूत्यै सन्न भवति । यावदेवेन्द्रियं वीᳲर्यं तदस्मिन्नाप्त्वा दधाति
२१ ज्योगामयाविनं याजयेदिन्द्रियेण वा एष वीर्येण व्यृध्यते यस्य
ज्योगामयति । यावदेवेन्द्रियं वीᳲर्यं तदस्मिन्नाप्त्वा दधाति । नानार्तेन
यष्टᳲव्यमित्याहुरार्तयज्ञ इवᳲह्येष तदाहुर्यष्टव्यमेव । सर्वो हि
२४ पुरुष आर्तः सर्वो बुभूषति । यदाश्विᳲन्यश्विनौ ह्यभिषज्यतां
यत्सारस्वती वाग्वै सरस्वती वाचा ह्यभिषज्यतां यदैन्द्रीन्द्रे हि तौ
तानीन्द्रियाणि वीर्याण्याप्त्वाधत्ताम् ॥ १ ॥

---

 No 2 A

Maitrāyaṇīsaṃhitā IV iii 4

देवाश्च वा असुराश्चास्पर्धन्त । स वृत्र इन्द्रमब्रवीत्त्वं देवानां श्रेष्ठो
ऽस्यहमसुराणां सं शक्नवाव । मा नाᳲवन्योऽन्यं वधीदिति । तौ
३ वै समामेतामनभिद्रोहाय । तं देवा वृत्रममन्यन्तायं वाव भविष्यतीति ।
तं इन्द्र ऐच्छन्हनामेममिति । सोऽब्रवीत्सधा वै मे सं हितानभिद्रोहायेति
तमग्निरब्रवीदहमेव त्वेतं पास्यामीति पृथिव्या अहमन्तरिक्षादिति
६ वरुणोऽहं दिव इति रुद्रस्ततो वै देवा वृत्रमघ्नन्वृत्रं खलु वा एष हन्ति
यो राजसूयेनाभिषिञ्चते । तद्वा त्रिभिमेवैतद्देवाश्च वा असुराश्च समयतन्त ।
तानग्निस्त्रेधात्मानं कृत्वा प्रत्ययततग्निरेवास्मिंल्लोके भूत्वा वरुणोऽन्तरिक्षे
९ रुद्रो दिवि । स इन्द्रोऽमन्यतायं वाव भविष्यतीति । सोऽब्रवीदहं
विभ्याभ्या आशाभ्या इति । ततो वा अजयंस्तञ्जित्या एवैतदेतेनैव
याजयेत्सङ्ग्रामे जयति सङ्ग्राममेतेनैव याजयेद्भ्रातृव्यवन्तं यो वास्य
१२ प्रियः स्यात्तं भवत्यात्मना परास्य भ्रातृव्यो भवति । यद्वै तदिन्द्रस्तुरीय
उपसमपद्यत तस्मादिन्द्रतुरीयं धेनुरनड्वाही दक्षिणा । यद्वहिनी तेनाग्नेयी
यद्धेनुः सती दान्ता तेन वारुणी यद्वांस्तेन रौद्री यत्पयस्तेनैन्द्री ।
१५ रूपैरेवैनाᳲ समर्धयतीन्द्रो वै नमुचिं नालभत । स रश्मीन्कुलाय कृत्वा-
न्वारोहद्गुमादित्यं तं वा अन्वमन्त्रयत सगरायास असावेति । सोऽब्रवी-

न्नाहं हनिष्यामीति। सोऽब्रवीत्संधां ते संदधे यथा त्वा न दिवा हनानि न नक्तं न शुष्केण नार्द्रेणेति। तस्य वा उपोदये सूर्यस्य १८ नीहारं संतत्यापां फेनेन शिरोऽछिनत्तद्वा एनमन्ववर्तत मित्रद्रुगसीति। पाप्मा वै नमुचेः शिरः पाप्मा वा एनं तदन्ववर्तत पाप्मानं वै स तेनापाहत। तत्पाप्मानमेवैतेनापहतेऽपा न्ययनादपामार्गैनाहरन्त्यापो वै २१ रक्षोघ्नीरपो रक्षांसि न तरन्ति रक्षसामपहत्यै। वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वर आत्मानं हि तस्य तदन्ववर्तत ये देवाः पुरःसदो अग्निनेत्रा रक्षोहणस्ते नोऽवन्तु। ते नः पान्तु तेभ्यः स्वाहेत्येत- २४ द्देवत्या वा इमा दिशो यथादेवतं वा एताभ्यो दिग्भ्योऽधि रक्षांस्यपहन्त्यनुपरिक्राम जुहोति। सर्वाभ्य एव दिग्भ्योऽधि रक्षां- स्यपहन्तीदमहं रक्षोभिः समूहाम्यग्ने संदह रक्षः संदग्धं रक्षा इत्याह २७ रक्षसा ध्वरांसै रक्षसामन्तरित्या। अथ यत्पुनः समूह्य जुहोति याभ्य एव दिग्भ्योऽधि रक्षांस्यपावधीत्ता भागिनीः करोत्यहिंसायै। रथः पञ्चवाही दक्षिणा पञ्च दिशः पञ्च देवताः संमृड्यै ॥ ३०



## No 2 B.

Maitrayanīsaṃhitā IV V 7.

ब्रह्मवादिनो वदन्ति किं तद्यज्ञे क्रियते यस्माद्धस्तादाना अन्ये पशवो मुखादाना अन्य इति। यदुपांशुर्हस्तेन गृह्यते तस्मान्मर्कटः पुरुषो हस्ती ते हस्तादाना मुखं वै वायव्यं यद्वायव्ये नेतरे ३ ग्रहा गृह्यन्ते तस्मादितरे पशवो मुखादानाः। ब्रह्मवादिनो वदन्ति किं तद्यज्ञे क्रियते यस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति संवत्सरे पुरुषा इत्युपांश्वन्तर्यामौ वा अन्वन्ये पशवः। पुरुषस्त्वै यज्ञेन संमितः। ६ प्राणापानौ वा उपांश्वन्तर्यामौ। यदेतौ ग्रहा असन्नौ हूयेते तस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति। संवत्सरो वा अग्निष्टोमो द्वादश मासाः संवत्सरो यदेत इतरे ग्रहाः साद्यन्ते तस्मात्पुरुषो जातः संवत्सरे ९ प्रतितिष्ठति।

## No 3

Kāthakasamhita VII x

अहर्वावासीत् न रात्री । सा यमी भ्रातर, मृत नामृष्यत । ता यदपृच्छन् यमि कर्हि ते भ्राता मृतेति अद्येत्येवाब्रवीत् । ते देवा ३ अब्रुवन् अन्तर्दधामेदम् रात्रीं करवामेति । ते रात्रिमकुर्वन् । ते राञ्या भूताया पशूनपश्यन् । सावेत् न वै पश्यन्तीति । सा न व्यौच्छत् । अरंस्यत् पशुषु । तान् देवा इच्छन्त पल्यायन्त ६ तॉश्छन्दोभिरन्वपश्यन् । तस्माच्छन्दोभिर्नक्तमग्निरुपस्थेय । पशूनामनुकुशात्यै । नास्मात्पशवस्तिरोभवन्ति य एव वेद । सावेत् अनु वा अरंस्महीति । सा व्यौच्छत् । ते देवा अब्रुवन् अमा वै नो वस्वभूदिति । ९ सामावस्या । अमा ह वा अस्य वसु भवति विन्दतेऽन्यस्य वसु नास्यान्यो वसु विन्दते य एव विद्वानग्निमुपतिष्ठते ।

देवा वा अह्नो रक्षांसि निरघ्नन् । तानि रात्रीं प्राविशन् । ता देवा १२ न व्येतुमधृष्णुवन् । त इन्द्रमब्रुवन् त्वं वै न ओजिष्ठोऽसि । त्वमिमा वीहीति । स्तुत मेत्यब्रवीत् नास्तुतो वीर्यं कर्तुमर्हामीति । तेऽब्रुवन् एष तेऽग्निर्निदिष्ठ स त्वा स्तौत्विति । तमग्निरस्तौत् । स स्तुत सर्वा १५ मृधस्सर्वानाष्ट्रास्सर्वाणि रक्षांस्यतरत् । इन्द्रो यजमानो यदग्निमुपतिष्ठते । सर्वा एव मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षांसि तरति । नास्य नक्त रक्षांसीशते य एव वेद । त्वष्टा वै भूत्वा प्रजापति प्रजा असृजत । त्वष्टा १८ यजमान । स यद्वाचावदत्तदभवत् । यद्वै वाचा वदति । तद्भवति । यद्यदेव वाचा वदति तत्तद्भवति तत्तत्सृजते ।

---

## No 3 A

Kāthakasamhita VIII ix

अग्निर्वा इम लोक नोपाकामयत । यदस्मिन्नाम मास पचन्ति यत्पुरुष दहन्ति यत्तैष यरन्ति तदमीम लोक नोपाकामयत ।

स यदिम लोकमुपावर्तत । या अस्य यज्ञियास्तन्व आसंस्ताभिरुद- ३
क्रामत् । ता एता. पवमाना पावका शुचिः तस्य या पवमाना त-
नूरासीत् पशूंस्तया प्राविशत् । या पावकापस्तया या शुचिर-
मुमादित्य तया । प्राणो वै पवमानः । प्राणेन पशवो यता. । यदग्नये ६
पवमानाय पशूनेवास्मे तेन यच्छति ।

एषा वा अस्य सा तनू. यया पशून् प्राविशत् यदिदं घृते हुते
प्रतीवार्चिरुज्ज्वलति । ९

एषा वा अस्य सा तनूः ययापः प्राविशत् । यदिदमप्सु परीव ददृशे ।
यद्धस्ता अवनिज्य स्नात्वा अदिव धत्ते । य एवाप्स्वग्नि. स एवैनं
तत्पावयति स स्वदयति । यदग्नये पावकाय सपशुमेवैन पावयति ।१२

एषा वा अस्य सा तनू. ययापः प्राविशत् ✓ यदिदं घृते हुते
शोणमिवार्चिरुज्ज्वलति । "

एषा वा अस्य सा तनूः ययामुमादित्य प्राविशत् । यदिदमुप-१५
रिष्टाद्दीव भाति । यज्ज्योतिरिव । यदग्नये शुचये । आविर्भूत्या एव
घोषायैव श्लोकायैव रुच एव ।

एषा वा अस्य सा तनूः ययामुमादित्य प्राविशत् ✓ यदिदं१८
घृते हुते सुवर्णमिवार्चिरुज्ज्वलति ।

यदेतानि हवींषि निरुप्यन्ते ता एवास्यैतत्तन्वस्सभरति । सतनूरेवै-
तत्सतेजा आधीयते । इमे वै लोका.✓ एतानि हवींषि } नानाबर्हींषि २१
भवन्ति । नाना हीमे लोका. प्रतिष्ठिता ॥ ९ ॥

## ✗ No. 3 B

Kāṭhakasaṃhitā XXIV i

या श्येताक्षी कृष्णवाला कृष्णशफा न तया क्रीणीयात् । हत वा
अस्या एतत्परिपिष्टम् । पितृदेवत्या सा । प्रमायुक स्यात् ।
२

३ या द्विरूपा न तया क्रीणीयात्। वार्त्रघ्नी सा। जिनाति वा जीयते वेत तया राजन्यस्य क्रीणीयात्। न हि तस्यान्तरास्ति। जिनाति वा हि स जीयते वा।

६ याधीलोधकर्णी तया षोडशिन क्रीणीयात्। अतिरिक्त वा एतद्रूपाणाम्। अतिरिक्त षोडशी। अतिरिक्तेनैवातिरिक्तमाप्नोति।

या बभ्रुरेकहायनी तया क्रीणीयात्। वाग्वै सोमक्रयणी। पुरुषो ९ वाक्। यदेकहायन्या क्रीणाति। तस्मादेकहायन पुरुषो वाच वदति। यज्ज्यायस्या क्रीणाति। तस्माज्ज्यायान् वदति।

प्रविश्योदेहीति । सा बभ्रुरेकहायनी भूत्वोदैत् । तयाक्रीणन् । तस्मात्सा सोमक्रयणी । तदस्या रूपम् ।

## No 4

Aitareyabrahmana I. 13-15

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्युः ।

भद्रादभि श्रेयः प्रेहीत्यन्वाह । अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान् स्वर्गमेव तल्लोकं यजमानं गमयति ॥ ३

बृहस्पतिः पुर एता ते अस्त्विति । ब्रह्म वै बृहस्पतिर्ब्रह्मैवास्मा एतत् पुरोगवमकर्ण वै ब्रह्मण्वद्रिष्यति ॥

अथेमवस्य वर आ पृथिव्या इति । देवयजनं वै वरं पृथिव्यै । देवयजन ६ एवैनं तदवसाययति ॥

आरे शत्रून् कृणुहि सर्ववीर इति । द्विषन्तमेवास्मै तत् पाप्मानं भ्रातृव्यमपबाधतेऽधरं पादयति ॥ ९

सोम यास्ते मयोभुव इति तृचं सौम्यं गायत्रमन्वाह । सोमे राजनि प्रोह्यमाणे स्वयैवेनं तद्देवतया स्वेन च्छन्दसा समर्धयति ॥

सर्वे नन्दन्ति यशसाऽऽगतेनेत्यन्वाह । यशो वै सोमो राजा । सर्वो १२ ह वा एतेन क्रीयमाणेन नन्दति यश्च यज्ञे लप्स्यमानो भवति यश्च न ॥

सभासाहेन सख्या सखाय इत्येष वै ब्राह्मणानां सभासाहः सखा यत् सोमो राजा ॥ किल्बिषस्पृदित्येष उ एव किल्बिषस्पृयो १५ वै भवति यः श्रेष्ठतामश्नुते स किल्बिषं भवति । तस्मादाहुर्माऽनुवोचो मा प्रचारीः किल्बिष नु मा यातयन्निति ॥

पितुषणिरित्यन्नं वै पितु दक्षिणा वै पितु । तामेनेन सनोत्यन्नस- १८ निमेवेनं तत् करोति ॥

अर हितो भवति वाजिनायेतीन्द्रियं वै वीर्यं वाजिनम्। आजरस
२१ हास्मै वाजिनं नापच्छिद्यते य एवं वेद॥

आगन् देव इत्यन्वाहागतो हि स तर्हि भवति॥

ऋतुभिर्वर्धतु क्षयमित्यृतवो वै सोमस्य राज्ञो राजभ्रातरो यथा
२४ मनुष्यस्य। तैरेवैनं तत् सहागमयति॥

दधातु नः सविता सुप्रजामिषमित्याशिषमाशास्ते॥

स नः क्षपाभिरहभिश्च जिन्वत्वित्यहानि वा अहानि रात्रयः क्षपा
२७ अहोरात्रैरेवास्मा एतामाशिषमाशास्ते। प्रजावन्तं रयिमस्मे समिन्व-
त्वित्याशिषमेवाशास्ते॥

या ते धामानि हविषा यजन्तीत्यन्वाह। ता ते विश्वा परिभूरस्तु
३० यज्ञम्। गयस्फानः प्रतरणः सुवीर इति। गवां नः स्फावयिता प्रतार-
यितैधीत्येव तदाह॥

अवीरहा प्रचरा सोम दुर्यानिति। गृहा वै दुर्या बिभ्यति वै सोमाद्राज्ञ
३३ आयतो यजमानस्य गृहाः। स यदेतामन्वाह शान्त्यैवैनं तच्छमयति
सोऽस्य शान्तो न प्रजां न पशून् हिनस्ति॥

इमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति। वरुणदेवत्यो
३६ वा एष तावद्यावदुपनद्धो यावत् परिश्रितानि प्रपद्यते। स्वयैवैनं तद्दे-
वतया स्वेन च्छन्दसा समर्धयति॥

शिक्षमाणस्य देवेति शिक्षते वा एष यो यजते॥ क्रतुं दक्षं वरुण
३९ संशिशाधीति। वीर्यं प्रज्ञानं वरुण संशिशाधीत्येव तदाह॥

ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेमेति। यज्ञो
वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौस्तामेव तदा-
४२ रुह्य तया स्वर्गं लोकमभि संतरति॥

ता एता अष्टावन्वाह रूपसमृद्धाः। एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं
यत् कर्म क्रियमाणमृगभिवदति॥ तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां

ता द्वादश संपद्यन्ते । द्वादश वै मासाः संवत्सरः । संवत्सरः प्रजापतिः। ४५
प्रजापत्यायतनाभिरेवाऽऽभी राध्नोति य एवं वेद ॥

त्रिः प्रथमां त्रिरुत्तमामन्वाह । यज्ञस्यैव तद्बर्सौ नह्यति स्थेम्ने बलाया-
विस्रंसाय ॥ १३ ॥ ४८

अन्यतरोऽनड्वान् युक्तः स्यादन्यतरो विमुक्तोऽथ राजानमुपावहरेयुः।
यदुभयोर्विमुक्तयोरुपावहरेयुः पितृदेवत्यं राजानं कुर्युर्यद्युक्तयोरयोगक्षेमः
प्रजा विन्देत् ताः प्रजाः परिप्लवेरन् । योऽनड्वान् विमुक्तस्तच्छालासदां ५१
प्रजानां रूपं यो युक्तस्तच्च क्रियाणाम् । ते ये युक्तेऽन्ये विमुक्तेऽन्य
उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति ॥

देवासुरा वा एषु लोकेषु समयतन्त । त एतस्यां प्राच्यां दिश्ययत-५४
न्त । तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त । तांस्ततोऽसुरा
अजयंस्ते प्रतीच्यां दिश्ययतन्त । तांस्ततोऽसुरा अजयंस्त उदीच्यां
दिश्ययतन्त । तांस्ततोऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त । ५७
ते ततो न पराजयन्त । सैषा दिगपराजिता तस्मादेतस्यां दिशि
यतेत वा यातयेद्वेश्वरो हानृणाकर्तोः ॥

ते देवा अब्रुवन्नराजतया वै नो जयन्ति राजानं करवामहा ६०
इति । तथेति । ते सोमं राजानमकुर्वंस्ते सोमेन राज्ञा सर्वा दिशोऽज-
यन् । एष वै सोमराजा यो यजते । प्राञ्चं तिष्ठन्त्यादधति तेन प्राचीं
दिशं जयति । तं दक्षिणा परिवहन्ति तेन दक्षिणां दिशं जयति । तं ६३
प्रत्यञ्चमावर्तयन्ति तेन प्रतीचीं दिशं जयति । तमुदीचस्तिष्ठत उपाव-
हरन्ति तेनोदीचीं दिशं जयति । सोमेन राज्ञा सर्वा दिशो जयति य
एवं वेद ॥ १४ ॥ ६६

हविरातिथ्यं निरुप्यते सोमे राजन्यागते । सोमो वै राजा यजमा-
नस्य गृहानागच्छति तस्मा एतद्धविरातिथ्यं निरुप्यते तदातिथ्यस्याति-
थ्यत्वम् ॥ ६९

नवकपालो भवति। नव वै प्राणा । प्राणान। कल्पयै प्राणाना प्रतिप्रज्ञात्यै ॥

७२ वैष्णवो भवति । विष्णुर्वै यज्ञः । स्वयैवैन तद्देवतया स्वेन च्छन्दसा समर्धयति ॥

सर्वाणि वाव च्छन्दासि च पृष्ठानि च सोम राजान क्रीतमन्वायन्ति।
७५ यावन्त खलु वै राजानमनुयन्ति तेभ्य सर्वेभ्य आतिथ्य क्रियते ॥

अग्निं मन्थन्ति सोमे राजन्यागते । तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वाहैत्युक्षाण वा वेहतं वा क्षदन्त एवमेवास्मा एतत् क्षदन्ते
७८ यदग्निं मन्थन्त्यग्निर्हि देवाना पशु ॥ १५ ॥

## No. 4 A

*Aitareyabrāhmaṇa II 11-12*

देवा वै यज्ञमतन्वत । तास्तन्वानानसुरा अभ्यायन् यज्ञवेशसमेषा करिष्याम इति । तानाप्रीते पशौ पुर इव पर्यग्नेै कृत प्रति पुरस्तादुपायस्ते
३ देवा प्रतिबुध्याग्निमयी पुरस्त्रिपुर पर्यास्यन्त यज्ञस्य चाऽऽत्मनश्च गुप्त्यै । ता एषामिमा अग्निमय्य पुरो दीप्यमाना भ्राजमाना अतिष्ठस्ता असुरा अनपधृष्येवापाद्रवस्तेऽग्निनैव पुरस्तादसुररक्षास्यपाघ्नताग्निना पश्चात् ॥
६ तथैवैतद्यजमाना यत् पर्यग्नि कुर्वन्त्यग्निमयीरेव तत् पुरस्त्रिपुर पर्यस्यन्ते यज्ञस्य चाऽऽत्मनश्च गुप्त्यै । तस्मात् पर्यग्नि कुर्वन्ति । तस्मात् पर्यग्नयेऽन्वाह ॥

९ त वा एत पशुमाप्रीत सन्त पर्यग्निकृतमुदञ्च नयन्ति । तस्योल्मुक पुरस्ताद्धरन्ति । यजमानो वा एष निदानेन यत् पशुरनेन ज्योतिषा यजमान पुरोज्योति स्वर्गं लोकमेष्यतीति । तेन ज्योतिषा
१२ यजमान पुरोज्योति स्वर्गं लोकमेति ॥

त यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति । यदेवैनमद आप्रीत सन्त पर्यग्निकृत बहिर्वेदि नयन्ति बर्हिषदमेवैन तत् कुर्वन्ति ॥

तस्योवध्यगोहं खनन्त्यौषधं वा ऊवध्यमियं वा ओषधीनां प्रतिष्ठा। १५
तदेनत् स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयन्ति ॥

तदाहुर्यदेष हविरेव यत् पशुरथास्य बह्वपैति लोमानि त्वगसृक्
कुष्ठिकाः शफा विषाणे स्कन्दति पिशितं केनास्य तदापूर्यत इति । १८
यदेवैतत् पशौ पुरोळाशमनुनिर्वपन्ति तेनैवास्य तदापूर्यते ॥

पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूतावजायेताम् ।
तद्यत् पशौ पुरोळाशमनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत् केवलेन नः २१
पशुनेष्टमसदिति । समेधेन हास्य पशुनेष्टं भवति केवलेन हास्य पशुनेष्टं
भवति य एवं वेद ॥ ११ ॥

तस्य वपामुत्खिद्याऽऽहरन्ति । तामध्वर्युः स्रुवेणाभिघारयन्नाह स्तोके- २४
भ्योऽनुब्रूहीति । तद्यत् स्तोका श्चोतन्ति सर्वदेवत्या वै स्तोका नेन्म
इमेऽनभिप्रीता देवान् गच्छानिति ॥

जुषस्व सप्रथस्तममित्यन्वाह । वचो देवप्सरस्तम हव्या जुह्वान २७
आसनीति अग्नेरेवैनांस्तदास्ये जुहोति ॥

इमं नो यज्ञममृतेषु धेहीति सूक्तमन्वाह । इमा हव्या जातवेदो
जुषस्वेति हव्यजुष्टिमाशास्ते । स्तोकानामग्ने मेदसो घृतस्येति मेदसश्च ३०
हि घृतस्य च भवन्ति ॥

होतः प्राशान प्रथमो निषद्येत्यग्निर्वै देवाना होताऽग्ने प्राशान प्रथमो
निषद्येत्येव तदाह ॥ ३३

घृतवन्तः पावक ते स्तोका श्चोतन्ति मेदस इति मेदसश्च ह्येव हि
घृतस्य च भवन्ति ॥

स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्यमित्याशिषमाशास्ते ॥ ३६
तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्येति घृतश्चुतो हि भवन्ति॥
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भवेति यज्ञसमृद्धिमाशास्ते॥
तुभ्यं श्चोतन्त्यध्रिगो शचीव स्तोकासो अग्ने मेदसो घृतस्येति मेदसश्च ३९
ह्येव हि घृतस्य च भवन्ति ॥

प्रविशस्ता रन्ता भानुनाऽऽशा हव्या जुषस्व मेधिरेति हव्यजुष्टि
४२ मेवाऽऽशास्ते ॥

ओजिष्ठ ते मध्यतो मेद उद्भृत प्र ते वय ददामहे । श्चोतन्ति
ते वसो स्तोका अधित्वचि प्रति तान् देवशो विहीत्यग्न्यैवैनास्तद्वषट्करोति।
४५ यथा सोमस्याग्ने वीहीति ॥

तद्यत् स्तोका श्चोतन्ति सर्वदेवत्या वै स्तोकास्तस्मादिय स्तोकशो
वृष्टिर्विभक्तोपाचरति ॥ १० ॥

## ✓ No 4 B

Aitareyabrahmana VIII 14

अथैन प्राच्या दिशि वसवो देवा षड्भिश्चैव पञ्चविंशैरहोभिरभ्य-
षिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि साम्राज्याय ।

तस्मादेतस्या प्राच्या दिशि ये के च प्राच्याना राजान साम्राज्यायैव
तेऽभिषिच्यन्ते । सम्राळित्येनानभिषिक्तानाचक्षत एतामेव देवाना
विहितिमनु ।

६ अथैन दक्षिणस्या दिशि रुद्रा देवा षड्भिश्चैव पञ्चविंशैरहो-
भिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भोज्याय।
तस्मादेतस्या दक्षिणस्या दिशि ये के च सत्वता राजानो भौज्यायैव तेऽ
९ भिषिच्यन्ते । भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवाना विहितिमनु ।

अथैन प्रतीच्या दिश्यादित्या देवा षड्भिश्चैव पञ्चविंशैरहोभिरभ्य
षिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि स्वाराज्याय ।
१२ तस्मादेतस्या प्रतीच्या दिशि ये के च नीच्याना राजानो येऽपाच्याना
स्वाराज्यायैव तेऽभिषिच्यन्ते । स्वराळित्येनानभिषिक्तानाचक्षत
एतामेव देवाना विहितिमनु ।

१५ अथैनमुदीच्या दिशि विश्वे देवा षड्भिश्चैव पञ्चविंशै
रहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृति

भिर्वैराज्याय । तस्मादेतस्यामुदीच्यां दिशि ये के च परेण हिमवन्त जन-पदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते । विराडि-१८ त्येनानभिषिक्तानाचक्षत एतामेव देवाना विहितिमनु ।

अथैनमस्या ध्रुवाया मध्यमाया प्रतिष्ठाया दिशि साध्याश्चाऽऽप्त्याश्च देवा षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृ-२१ तिभी राज्याय । तस्मादस्या ध्रुवाया मध्यमाया प्रतिष्ठाया दिशि ये के च कुरुपञ्चालाना राजान सवशोशीनराणा राज्यायैव तेऽभिषिच्यन्ते । राजेत्येनानभिषिक्तानाचक्षत एतामेव देवाना विहितिमनु । २४

अथैनमूर्ध्वाया दिशि मरुतश्चाङ्गिरसश्च देवा षड्भिश्चैव पञ्चविंशै-रहोभिरभ्यषिञ्चन्नेतेन तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि पारमेष्ठ्याय महाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायेति स परमेष्ठी प्राजापत्यो-२७ ऽभवत् ।

स एतेन महाभिषेकेणाभिषिक्त इन्द्र सर्वा जितीरजयत्सर्वांल्लोका-नविन्दत्सर्वेषां देवाना श्रैष्ठ्यमतिष्ठा परमतामगच्छत्साम्राज्य भौज्य ३० स्वाराज्य वैराज्य पारमेष्ठ्य राज्य माहाराज्यमाधिपत्य जित्वाऽस्मिँल्लोके स्वयभू स्वराळमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृत. समभव-त्सममवत् ॥ १४ ॥ ३३

## ✗ No 5

### Tāndyamahābrāhmana XII vi 1-13

प्रमंहिष्ठाय गायतेति ॥ १ ॥ यद्गायतेति महस एव तद्रूप क्रियते ॥ २ ॥ त ते मदङ्गृणीमसीति मदवद्वै रसवत्तृतीयसवन मदमेव तद्रस दधाति ॥ ३ ॥ श्रुधी हव तिरश्च्या इति श्रुत्या एव ॥ ४ ॥ ३ प्रमंहिष्ठीय भवति ॥ ५ ॥ प्रमंहिष्ठीयेन वा इन्द्रो वृत्राय वज्र मावर्तयत्तमस्तृणुत भ्रातृव्यवान् प्रमंहिष्ठीयेनोक्थानि प्रणयेत स्तृणुते भ्रातृव्य वसीयांश्चात्मना भवति ॥ ६ ॥ हारिवर्ण भवति ॥ ७ ॥ ६

इन्द्रश्च वै नमुचिश्चासुर॰ समदधाता न नौ नक्तं न दिवाहनन्नार्द्रेण न शुष्केणेति। तस्य व्युष्टायामनुदित आदित्येऽपां फेनेन शिरोऽच्छिनत् एतद्वै
९ न नक्तं न दिवा यत् व्युष्टायामनुदित आदित्य एतन्नार्द्रं न शुष्कं यदपां फेनस्तदेनं पापीयं वाचं वददन्ववर्तत वीरहन्नद्रुह्यो द्रुह इति । तन्नर्चा न साम्नापहन्तुमशक्नोत् ॥ ८ ॥ तद्धारिवर्णस्यैव निधनेनापाहत ॥ ९ ॥
१२ अपशुचᳲहते हारिवर्णस्य निधनेन श्रियश्च हरश्चोपैति तुष्टुवान. ॥ १० ॥ तैरश्च्यम्भवति ॥ ११ ॥ अङ्गिरसः स्वर्गं लोकं यन्तो रक्षाᳲस्यन्वसचन्त । तान्येतेन तिरश्च्याङ्गिरसस्तिर्यङ् पर्य्यवैत् यत्तिर्य्यङ् पर्य्यवै-
१५ त्तस्मात्तैरश्च्यं । पाप्मा वाऽर्वस्त तानसचत त तैरश्च्येनापाप्रतापपाप्मानᳲहते तैरश्च्येन तुष्टुवानः ॥ १२ ॥ सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥ १३ ॥

## ✓ No 6

Taittirīyabrāhmaṇa I 1 2

कृत्तिकास्वग्निमादधीत । एतद्वा अग्नेर्नक्षत्रम् । यत्कृत्तिकाः । स्वायामेवैनं देवतायामाधाय । ब्रह्मवर्चसी भवति ।

३ मुखं वा एतन्नक्षत्राणाम् । यत्कृत्तिकाः । य॰ कृत्तिकास्वग्निमाधत्ते । मुख्य एव भवति ।

अथो खलु ( १ ) अग्निनक्षत्रमित्यपचायन्ति । गृहान्ह दाहुको
६ भवति ।

प्रजापती रोहिण्यामग्निमसृजत । तं देवा रोहिण्यामादधत । ततो वै ते सर्वान्रोहानरोहन् । तद्रोहिण्यै रोहिणित्वम् । यो रोहिण्यामग्नि-
९ माधत्ते । ऋध्नोत्येव । सर्वान्रोहान्रोहति ।

देवा वै भद्राः सन्तोऽग्निमाधित्सन्त । (२) तेषामनाहितोऽग्निरासीत् । अथैभ्यो वामं वस्वपाक्रामत् । ते पुनर्वस्वोरादधत । ततो वै तान्वाम

वसूपावर्तेत। यः पुराभद्रः सन्पापीयान्त्स्यात्। स पुनर्वस्वोरग्निमादधीत।१२
पुनरेवैनं वामं वसूपावर्तते। भद्रो भवति।

यः कामयेत दानकामा मे प्रजाः स्युरिति। स पूर्वयोः फल्गुन्यो-
रग्निमादधीत (३)। अर्यम्णो वा एतन्नक्षत्रम्। यत्पूर्वे फल्गुनी।१५
अर्यमेति तमाहुर्यो ददाति। दानकामा अस्मै प्रजा भवन्ति।

यः कामयेत भगी स्यामिति। स उत्तरयोः फल्गुन्योरग्निमादधीत।
भगस्य वा एतन्नक्षत्रम्। यदुत्तरे फल्गुनी। भग्येव भवति।१८

कालकञ्जा वै नामासुरा आसन् (४)। ते सुवर्गाय लोकाया-
ग्निमचिन्वन्त। पुरुष इष्टकामुपादधात्पुरुष इष्टकाम्। स इन्द्रो ब्राह्मणो
ब्रुवाण इष्टकामुपाधत्त। एषा मे चित्रा नामेति। ते सुवर्गलोकमाभा-२१
रोहन्। स इन्द्र इष्टकामावृहत्। तेऽवाकीर्यन्त। येऽवाकीर्यन्त। त
ऊर्णावभयोऽभवन्। द्वावुदपतताम् (५)। तौ दिव्यौ श्वानावभवताम्।
यो भ्रातृव्यवान्त्स्यात्। स चित्रायामग्निमादधीत। अवकीर्यैव भ्रातृव्यान्।२४
ओजो बलमिन्द्रियं वीर्यमात्मन्धत्ते।

वसन्ता ब्राह्मणोऽग्निमादधीत। वसन्तो वै ब्राह्मणस्यर्तुः। स्व एवै-
नमृतावाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतदृतूनाम् (६)।२७
यद्वसन्तः। यो वसन्ताऽग्निमाधत्ते। मुख्य एव भवति। अथो योनि-
मन्तमेवैनं प्रजातमाधत्ते। ग्रीष्मे राजन्य आदधीत। ग्रीष्मो वै राजन्य-
स्यर्तुः। स्व एवैनमृतावाधाय। इन्द्रियावी भवति। शरदि वैश्य आदधीत।३०
शरद्वै वैश्यस्यर्तुः (७)। स्व एवैनमृतावाधाय। पशुमान्भवति।

न पूर्वयोः फल्गुन्योरग्निमादधीत। एषा वै जघन्या रात्रिः संवत्स-
रस्य। यत्पूर्वे फल्गुनी। पृष्टित एव संवत्सरस्याग्निमाधाय। पापीयान्भ-३३
वति। उत्तरयोरादधीत। एषा वै प्रथमा रात्रिः संवत्सरस्य। यदुत्तरे
फल्गुनी मुखत एव संवत्सरस्याग्निमाधाय। वसीयान्भवति।
अथो खलु। यदैवैनं यज्ञ उपनमेत्। अथाऽऽदधीत। सैवास्यर्द्धिः (८)।३६

## V No 6 A

Taittiriya Brahmana I 1 9

शमीगर्भादग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति ॥

३ अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेषणमददुः । तत् प्राऽऽश्नात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् ॥

६ सा द्वितीयमपचत् ( १ ) । तस्या उच्छेषणमददुः । तत् प्राऽऽश्नात् । सा रेतोऽधत्त । तस्यै मित्रश्च वरुणश्चाजायेताम् ॥

सा तृतीयमपचत् । तस्या उच्छेषणमददुः । तत् प्राऽऽश्नात् । सा ९ रेतोऽधत्त । तस्या अंशश्च भगश्चाजायेताम् ॥

सा चतुर्थमपचत् ( २ ) । तस्या उच्छेषणमददुः । तत् प्राऽऽश्नात् । सा रेतोऽधत्त । तस्या इन्द्रश्च विवस्वाꣳश्चाजायेताम् ॥

१२ ब्रह्मौदनं पचति । रेत एव तद्दधाति । प्राश्नन्ति ब्राह्मणा ओदनम् । यदाज्यमुच्छिष्यते । तेन समिधोऽभ्यज्याऽऽदधाति । उच्छेषणाद्धा अदिती रेतोऽधत्त ( ३ ) । उच्छेषणादेव तद्रेतो धत्ते ॥

१५ अस्थि वा एतत् । यत् समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोऽभ्यज्याऽऽदधाति । अस्थ्येव तद्रेतसि दधाति ॥

तिस्र आदधाति मिथुनत्वाय । इयतीर्भवन्ति । प्रजापतिना यज्ञमु- १८ खेन संमिताः (४) । इयतीर्भवन्ति । यज्ञपरुषा संमिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमिताः ॥

आर्द्रा भवन्ति । आर्द्रमिव हि रेतः सिच्यते । चित्रियस्याश्व- २१ त्थस्याऽऽदधाति । चित्रमेव भवति । घृतवतीभिरादधाति ( ५ ) । एतद्वा अग्नेः प्रियं धाम । यद्घृतम् । प्रियेणैवैनं धाम्ना समर्धयति । अथो तेजसा ॥

गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात् । गायत्रच्छन्दा वै ब्राह्मणः । स्वस्य २४ छन्दसः प्रत्ययनस्त्वाय । त्रिष्टुभी राजन्यस्य । त्रिष्टुप्छन्दा वै राजन्यः स्वस्य छन्दसः प्रत्ययनस्त्वाय ( ६ ) । जगतीभिर्वैश्यस्य । जगतीछन्दा वै वैश्यः । स्वस्य च्छन्दसः प्रत्ययनस्त्वाय ॥ २७

तꣳ संवत्सरं गोपायेत् । संवत्सरꣳ हि रेतो हितं वर्धते । यद्येनꣳसंवत्सरे नोपनमेत् । समिधः पुनरादध्यात् । रेत एव तद्धितं वर्धमानमेति ॥

न माꣳसमश्नीयात् । न स्त्रियमुपेयात् ( ७ ) । यन्माꣳसमश्नीयात् । ३० यत् स्त्रियमुपेयात् । निर्वीर्यः स्यात् । नैनमग्निरुपनमेत् ॥

श्व आधास्यमानो ब्रह्मौदनं पचति । आदित्या वा इत उत्तमाः सुवर्गं लोकमायन् । ते वा इतो यन्तं प्रतिनुदन्ते । एते खलु वावाऽऽ- ३३ दित्याः । यद्ब्राह्मणाः । तैरेव सन्त्वं गच्छति ( ८ ) । नैनं प्रतिनुदन्ते ॥

ब्रह्मवादिनो वदन्ति । को सः । अग्निः कार्यः । योऽस्मै प्रजां पशून् प्रजनयतीति [ शल्कैस्ताꣳरात्रिमग्निमिन्धीत । तस्मिन्नुपव्युषमरणी ३६ निदध्यात् । यथर्षभाय वाशितान्यांविच्छायति । तादृगेव तत् । अपोद्धृह्य भस्माग्निं मन्थति ( ९ ) । सैव साग्नेः संततिः ] तं मन्थित्वा प्राञ्चमुद्धरति । संवत्सरमेव तद्रेतो हितं प्रजनयति ॥ ३९

अनाहितस्तस्याग्निरित्याहुः । यः समिधोऽनाधायाग्निमाधत्त इति । ताः संवत्सरे पुरस्तादादध्यात् । संवत्सरादेवैनमवरुध्याऽऽधत्ते । यदि संवत्सरे नाऽऽदध्यात् । द्वादश्यां पुरस्तादादध्यात् । संवत्सरप्रतिमा वै ४२ द्वादश रात्रयः । संवत्सरमेवास्याऽऽहिता भवन्ति । यदि द्वादश्यां नाऽऽद- ध्यात् । त्र्यहे पुरस्तादादध्यात् । आहिता एवास्य भवन्ति ( १० ) ।

 No. 6 B

Taittirīyabrāhmaṇa I iv 10

अग्निर्वाव संवत्सरः । आदित्यः परिवत्सरः । चन्द्रमा इदावत्सरः । वायुरनुवत्सरः ॥

३ यद्वैश्वदेवेन यजते । अग्निमेव तत् संवत्सरमाप्नोति । तस्माद्वैश्वदेवेन यजमानः । संवत्सरीणाꣳस्वस्तिमाशास्त इत्याशासीत ॥

यद्वरुणप्रघासैर्यजते । आदित्यमेव तत् परिवत्सरमाप्नोति (१)। त-
६ स्माद्वरुणप्रघासैर्यजमानः । परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत॥

यत् साकमेधैर्यजते । चन्द्रमसमेव तदिदावत्सरमाप्नोति । तस्मात् साकमेधैर्यजमानः । इदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत ॥

९ यत् पितृयज्ञेन यजते । देवानेव तदन्ववस्यति । अथ वा अस्य वायुश्चा-नुवत्सरश्चाप्रीतावुच्छिष्येते ॥

यच्छुनासीरीयेण यजते (२)। वायुमेव तदनुवत्सरमाप्नोति ।
१२ तस्माच्छुनासीरीयेण यजमानः । अनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत ॥

संवत्सरं वा एष ईप्सतीत्याहु । यश्चातुर्मास्यैर्यजत इति । एष ह
१५ त्वै संवत्सरमाप्नोति । य एवं विद्वाꣳश्चातुर्मास्यैर्यजते ॥

विश्वे देवाः समयजन्त । तेऽग्निमेवायजन्त । त एतं लोकमजयन् (३)। यस्मिन्नग्निः । यद्वैश्वदेवेन यजते । एतमेव लोकं जयति ।
१८ यस्मिन्नग्निः । अग्नेरेव सायुज्यमुपैति ॥ यदा वैश्वदेवेन यजते । अथ संवत्सरस्य गृहपतिमाप्नोति ।

यदा संवत्सरस्य गृहपतिमाप्नोति । अथ सहस्रयाजिनमाप्नोति । यदा
२१ सहस्रयाजिनमाप्नोति (४)। अथ गृहमेधिनमाप्नोति । यदा गृहमेधिन-माप्नोति । अथाग्निर्भवति ॥ यदाऽग्निर्भवति । अथ गौर्भवति ॥

एषा वै वैश्वदेवस्य मात्रा । एतद्वा एतेषामवमम् । अतोऽतो वा
२४ उत्तराणि श्रेयाꣳसि भवन्ति । यद्विश्वे देवा समयजन्त । तद्वैश्वदेवस्य वैश्वदेवत्वम् (५) ॥

अथाऽऽदित्यो वरुणꣳ राजानं वरुणप्रघासैरयजत । स एतं लोकमजयत्।
२७ यस्मिन्नादित्यः । यद्वरुणप्रघासैर्यजते । एतमेव लोकं जयति । यस्मिन्ना-

दि॒त्यः । आ॒दि॒त्यस्यै॒व सायु॑ज्यमु॒पै॑ति । यदा॑दि॒त्यो वरु॑ण॒श्राजा॑नं वरुणप्रघा॒सैरय॑जत ।तद्व॑रुणप्रघा॒सानां॑ वरुणप्रघास॒त्वम् ॥

अथ॒ सोमो॒ राजा॒ छन्दा॑ꣳसि साकमे॒धैरय॑जत (६)। स ए॒तं ३० लो॒कम॑जयत् । यस्मि॑ꣴश्च॒न्द्रमा॑ वि॒भाति॑ । यत् सा॑कमे॒धैर्यज॑ते । ए॒तमे॒व लो॒कं ज॑यति । यस्मि॑ꣴश्च॒न्द्रमा॑ वि॒भाति॑ । च॒न्द्रम॑स ए॒व सायु॑ज्यमु॒पै॑ति । सोमो॒ वै च॒न्द्रमाः॑ । ए॒ष ह॒ त्वै सा॒क्षात् सोमं॑ भक्षयति । य ए॒वं ३३ वि॒द्वान्त्सा॑कमे॒धैर्यज॑ते । यत् सोम॑श्च राजा॒ छन्दा॑ꣳसि च स॒मैध॑न्त (७)। तत् सा॑कमे॒धानाꣳ॑ साकमेध॒त्वम् ॥

अथ॒र्तवः॑ पि॒तरः॑ प्र॒जाप॑तिं पि॒तरं॑ पितृय॒ज्ञेनाय॑जन्त । त ए॒तं लो॒कम॑- ३६ जयन् । यस्मि॑न्नृ॒तवः॑ । यत् पि॑तृय॒ज्ञेन॒ यज॑ते । ए॒तमे॒व लो॒कं ज॑यति । यस्मि॑न्नृ॒तवः॑ । ऋ॒तू॒नामे॒व सायु॑ज्यमु॒पै॑ति । यदृ॒तवः॑ । पि॒तरः॑ प्र॒जाप॑तिं पि॒तरं॑ पितृय॒ज्ञेनाय॑जन्त । तत् पि॑तृयज्ञस्य॑ पितृयज्ञ॒त्वम् (८) ॥ ३९

अथौष॑धय इ॒मं दे॒वं त्र्य॑म्बकै॒रय॑जन्त॒ प्रथे॑म॒हीति॑ । ततो॒ वै ता अ॑प्रथन्त । य ए॒वं वि॒द्वाꣴस्त्र्य॑म्बकै॒र्यज॑ते । प्रथ॑ते प्र॒जया॑ प॒शुभिः॑ ॥

अथ॑ वा॒युः प॑रमे॒ष्ठिनꣳ॑ शुनासी॒रीये॒णाय॑जत । स ए॒तं लो॒कम॑जयत् । ४२ यस्मि॑न् वा॒युः । यच्छु॑नासी॒रीये॑ण॒ यज॑ते । ए॒तमे॒व लो॒कं ज॑यति । यस्मि॑न् वा॒युः (९)। वा॒योरे॒व सायु॑ज्यमु॒पै॑ति ॥

ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । प्र चा॑तुर्मास्ययाजी मी॑यता ३ न मर्मी॑यता३ ४४ इति॑ । जी॒वन् वा ए॒ष ऋ॒तून॒प्ये॑ति । यदि॑ व॒सन्ता॑ प्र॒मीय॑ते । व॒सन्तो॑ भव॑ति । यदि॑ ग्री॒ष्मे ग्री॒ष्मः । यदि॑ व॒र्षासु॑ व॒र्षाः । यदि॑ श॒रदि॑ श॒रत् । यदि॒ हेम॑न् हे॒मन्तः॑ । ऋ॒तुर्भू॒त्वा सं॑वत्स॒रम॒प्ये॑ति । सं॒व॒त्स॒रः प्र॒जाप॑तिः । ४७ प्र॒जाप॑ति॒र्वाव॒षः (१०) ॥

No. 6 C

Taittiriyabrāhmana II. ii 9

इ॒दं वा अग्रे॒ नैव किंच॒नाऽऽसी॑त् । न द्यौरा॑सीत् । न पृ॑थि॒वी । नान्तरि॑क्षम् । तदस॑दे॒व सन्मनो॑ऽकुरुत॒ स्यामिति॑ । तद॑तप्यत । तस्मा॑-

³ तेपानाद्धूमोऽजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादग्निरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानाज्ज्योतिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानान्मरीचयोऽजायन्त ।
६ तद्भूयोऽतप्यत । तस्मात्तेपानादुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव समहन्यत । 

तद्वस्तिमभिनत् (२)। स समुद्रोऽभवत् । तस्मात्समुद्रस्य न पिबन्ति ।
९ प्रजननमिव हि मन्यन्ते । तस्मात्पशोर्जायमानादापः पुरस्ताद्यन्ति ।

तद्दशहोतान्वसृज्यत । प्रजापतिर्वै दशहोता ।
य एवं तपसो वीर्यं विद्वाꣳस्तप्यते । भवत्येव ।

१२ तद्वा इदमापः सलिलमासीत् । सोऽरोदीत्प्रजापतिः (३)। स कस्मा अज्ञि । यद्यस्या अप्रतिष्ठाया इति । यदप्स्ववापश्यत । सा पृथिव्यभवत् । यद्व्यमृष्ट । तदन्तरिक्षमभवत् । यदूर्ध्वमुदमृष्ट । सा द्यौरभवत् ।
१५ यदरोदीत् । तदनयो रोदस्त्वम् (४)। य एवं वेद । नास्य गृहे रुदन्ति । एतद्वा एषां लोकानां जन्म । य एवमेषां लोकानां जन्म वेद । नैषु लोकेष्वार्तिमार्च्छति । स इमां प्रतिष्ठामविन्दत ।

१८ स इमां प्रतिष्ठां वित्त्वाऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स जघनादसुरानसृजत (५)। तेभ्यो मृन्मये पात्रेऽन्नमदुहत् । याऽस्य सा तनूरासीत् । तामपाहत । सा तमिस्राऽभवत् ।

२१ सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स प्रजननादेव प्रजा असृजत । तस्मादिमा भूयिष्ठाः । प्रजननाद्ध्येना असृजत (६)। ताभ्यो दारुमये पात्रे पयोऽदुहत् । याऽस्य सा तनूरासीत् ।
२४ तामपाहत । सा ज्योत्स्नाऽभवत् ।

सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स उपपक्षाभ्यामेवर्तूनसृजत । तेभ्यो रजते पात्रे घृतमदुहत् । याऽस्य
२७ सा तनूरासीत् (७)। तामपाहत । सोऽहोरात्रयोः सन्धिरभवत् ।

सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स
मुखाद्देवानसृजत । तेभ्यो हरिते पात्रे सोममदुहत् । याऽस्य सा तनूरासीत् ।
तामपाहत । तदहरभवत् ( ८ ) । 30

एते वै प्रजापतेर्दोहाः । य एवं वेद । दुह एव प्रजाः ।

दिवा वै नोऽभूदिति । तद्देवानां देवत्वम् । य एवं देवानां देवत्वं
वेद । देववानेव भवति । 33

एतद्वा अहोरात्राणां जन्म । य एवमहोरात्राणां जन्म वेद । नाहो-
रात्रेष्वार्तिमार्च्छति ( ९ ) ।

असतोऽधि मनोऽसृज्यत । मनः प्रजापतिमसृजत । प्रजापतिः प्रजा 36
असृजत । तद्वा इदं मनस्येव परमं प्रतिष्ठितम् । यदिदं किंच । तदेत-
च्छ्वोवस्यसं नाम ब्रह्म ।

व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति । प्रजायते 39
प्रजया पशुभिः । प्र परमेष्ठिनो मात्रामाप्नोति । य एवं वेद ( १० ) ।

✓ No 6 D

Taittirīyabrāhmaṇa III. ii. 8–9

देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामि-
त्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह
यत्यै । संवपामीत्याह । यथादेवतमेवैनानि संवपति ॥ समापो अद्भिर- 3
ग्मत समोषधयो रसेनेत्याह । आपो वा ओषधीर्जिन्वन्ति । ओषधयो-
ऽपो जिन्वन्ति । अन्या वा एतासामन्या जिन्वन्ति ( १ ) । 8.9

तस्मादेवमाह ॥ सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमि- 6
त्याह । आपो वै रेवतीः । पशवो जगतीः । ओषधयो मधुमतीः ।
आप ओषधीः पशून् । तानेवास्मा एकधा सꣳसृज्य । मधुमतः
करोति ॥ अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वमिति पर्याप्ला- 9
वयति । यथा सुवृष्टꣳ स्यादेवमेनं विसृज्य ( २ ) । 8.2

आप ओषधीर्भिहयन्ति । ताद्दगेव तत् ॥ जनयत्यै त्वा संयौमीत्याह ।
१२ प्रजा एवैतेन दाधार । अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्त्यै । मखस्य
शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत् पुरोडाशः ।
तस्मादेवमाह ( ३ ) ।

१५ घर्मोऽसि विश्वायुरित्याह । विश्वमेवाऽऽयुर्यजमाने दधाति । उरु
प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह । यजमानमेव प्रजया पशुभिः
प्रथयति ॥ त्वचं गृह्णीष्वेत्याह । सर्वमेवैन॰ सतनु करोति । अथाप
१८ आनीय परिमार्ष्टि । मा॰स एव तत् त्वचं दधाति । तस्मात् त्वचा
मा॰सं छन्नम् ॥ घर्मो वा एषोऽशान्त. ( ४ ) ।

अर्धमासेऽर्धमासे प्रवृज्यते । यत् पुरोडाशः । स ईश्वरो यजमान-
२१ ॰शुचाऽप्रदहः । पर्यग्नि करोति । पशुमेवैनमकः । शान्त्या अप्रदाहाय ।
त्रिः पर्यग्नि करोति । त्र्यावृद्धि यज्ञः ॥ अथो रक्षसामपहत्यै । अन्तरित॰
रक्षोऽन्तरिता अरातय इत्याह ( ५ ) ।

२४ रक्षसामन्तर्हित्यै । पुरोडाशं वा अधिश्रित॰ रक्षा॰स्यजिघा॰सन् ।
दिवि नाको नामाग्नी रक्षोहा । स एवास्माद्रक्षा॰स्यपाहन् ॥ देवस्त्वा
सविता श्रपयत्वित्याह । सवितृप्रसूत एवैन॰ श्रपयति । वर्षिष्ठे अधिनाक
२७ इत्याह । रक्षसामपहत्यै । अग्निस्ते तनुवं माऽतिधागित्याहानतिदाहाय ।
अग्ने हव्य॰रक्षस्वेत्याह गुप्त्यै ( ६ ) ।

अविदहन्तः श्रपयतेति वाच विसृजते । यज्ञमेव हवी॰ष्यभिव्याहृत्य
३० प्रतनुते । पुरोरुचमविदाहाय शृतं करोति । मस्तिष्को वै पुरोडाशः ।
तं यन्नाभिवासयेत् । आविर्मस्तिष्कः स्यात् । अभिवासयति । तस्माद्गुहा
मस्तिष्कः । भस्मनाऽभिवासयति । तस्मान्मा॰सेनास्थि च्छन्नम् ( ७ ) ।

३३ वेदेनाभिवासयति । तस्मात् केशैः शिरश्छन्नम् । अखलतिभावुको
भवति । य एवं वेद ॥ पशोर्वै प्रतिमा पुरोडाशः । स नायजुष्कमभि-
वास्यः । यथैव स्यात् । ईश्वरा यजमानस्य पशवः प्रमेतोः ॥ सं ब्रह्मणा
३६ पृच्यस्वेत्याह । प्राणा वै ब्रह्म ( ८ ) ।

प्राणाः पशवः । प्राणैरेव पशून्त्संपृणक्ति । न प्रमायुका भवन्ति ।
यजमानो वै पुरोडाशः । प्रजा पशवः पुरीषम् । यदेवमभिवासयति ।
यजमानमेव प्रजया पशुभिः समर्धयति । देवा वै हविर्भृत्वाऽब्रुवन् । ३९
कस्मिन्निदं म्रक्ष्यामह इति । सोऽग्निरब्रवीत् ( ९ ) ।

मयि तनूः संनिधध्वम् । अहं वस्तं जनयिष्यामि । यस्मिन्
म्रक्ष्यध्व इति । ते देवा अग्नौ तनूः सन्न्यदधत । तस्मादाहुः । अग्निः सर्वा ४२
देवता इति ॥ सोऽङ्गारेणापः । अभ्यपातयत् । तत एकतोऽजायत ।
स द्वितीयमभ्यपातयत् ( १० ) ।

ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत । ४५
यदद्भ्योऽजायन्त । तदाप्त्यानामाप्त्यत्वम् । यदात्मभ्योऽजायन्त । तदा-
त्म्यानामात्म्यत्वम् ॥ ते देवा आप्त्येष्वमृजत । आप्त्या अमृजत सूर्याभ्यु-
दिते । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते ( ११ ) । ४८

सूर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ ।
अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि । तद्ब्रह्महणं
नात्यच्यवत । अन्तर्वेदि निनयत्यवरुद्ध्यै । उल्मुकेनाभिगृह्णाति शृत- ५१
त्वाय । शृतकामा इव हि देवाः ( १२ ) ॥

॥ इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वितीयाध्यायेऽष्टमोऽनुवाकः ॥

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्या- ५४
मित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामि-
त्याह यत्यै ॥ आददे इन्द्रस्य बाहुरसि दक्षिण इत्याह । इन्द्रियमेव
यजमाने दधाति ॥ सहस्रभृष्टिः शततेजा इत्याह । रूपमेवास्यैतन्म- ५७
हिमानं व्याचष्टे । वायुरसि तिग्मतेजा इत्याह । तेजो वै वायुः (१) ९.१

तेज एवास्मिन् दधाति ॥ विपाद्द नामासुर आसीत् । सोऽबिभेत् ।
यज्ञेन मा देवा अभिभविष्यन्तीति । स पृथिवीमभ्यवमीत् । साऽमेध्याऽ- ६०
भवत् ॥ अथो यदिन्द्रो वृत्रमहन् । तस्य लोहितं पृथिवीमनु व्यधावत् ।
सा मेध्याऽभवत् ॥ पृथिवि देवयजनीत्याह ( २ ) । ९.२

६३ मेध्यामेवैनां देवयजनीं करोति ॥ ओषध्यास्ते मूलं मा हिंसिषमि-
त्याह । ओषधीनामहिंसायै ॥ व्रजं गच्छ गोस्थानमित्याह। छन्दांसि
वै व्रजो गोस्थानः । छन्दांस्येवास्मै व्रजं गोस्थानं करोति ॥ वर्षतु ते
६६ द्यौरित्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे ॥ बधान देव सवितः परमस्यां
परावतीत्याह (३) ।

द्वौ वाव पुरुषौ । यं चैव द्वेष्टि । यश्चैनं द्वेष्टि । तावुभौ बध्नाति
६९ परमस्यां परावति शतेन पाशैः । योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो
मा मौगित्याहानिर्मुक्त्यै ॥ अररुर्वै नामासुर आसीत् । स पृथिव्यामु-
पम्लुप्तोऽशयत् । तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन् ।
७२ भ्रातृव्यो वा अररुः । अपहतोऽररुः पृथिव्या इति यदाह (४) ।

भ्रातृव्यमेव पृथिव्या अपहन्ति । तेऽमन्यन्त । दिवं वा अयमित
पतिष्यतीति । तमररुस्ते दिवं मा स्कानिति दिवः पर्यबाधन्त। भ्रातृव्यो
७५ वा अररुः। अररुस्ते दिवं मा स्कानिति यदाह । भ्रातृव्यमेव दिवः
परिबाधते ॥ स्तम्बयजुर्हरति । पृथिव्या एव भ्रातृव्यमपहन्ति । द्वितीयं
हरति (५) ।

७८ अन्तरिक्षादेवैनमपहन्ति। तृतीयं हरति । दिव एवैनमपहन्ति । तूष्णीं
चतुर्थं हरति । अपरिमितादेवैनमपहन्ति ॥ असुराणां वा इयमग्र आ-
सीत् । यावदासीनः परापश्यति। तावद्देवानाम् । ते देवा अब्रुवन् । अस्त्वे-
८१ व नो स्यामपीति (६) ।

क्य नो दास्यथेति । यावत् स्वयं परिगृह्णीथेति । ते वसवस्त्वेति
दक्षिणतः पर्यगृह्णन् । रुद्रास्त्वेति पश्चात् । आदित्यास्त्वेत्युत्तरतः । तेऽ-
८४ ऽग्निना प्राञ्चोऽजयन् । वसुभिर्दक्षिणा । रुद्रैः प्रत्यञ्चं । आदित्यैरुदञ्चं ।
यस्यैवं विदुषो वेदिं परिगृह्णन्ति (७) ।

भवत्यात्मना। पराऽस्य भ्रातृव्यो भवति ॥ देवस्य सवितुः सव
८७ इत्याह प्रसूत्यै । कर्म कृण्वन्ति वेधस इत्याह । इषितं हि कर्म क्रियते ।

पृथिव्यै मेध्यं चामेध्यं च व्युदक्रामताम् । प्राचीनमुदीचीनं मेध्यम् ॥ प्रतीचीनं दक्षिणा मेध्यम् । प्राचीमुदीचीं प्रवणां करोति । मेध्यामेवैनां देवयजनीं करोति (८)। १०

प्राञ्चौ वेदयःसावुन्नयति । आहवनीयस्य परिगृहीत्यै । प्रतीची श्रोणी। गार्हपत्यस्य परिगृहीत्यै । अथो मिथुनत्वाय । उद्धन्ति । यदेवास्या अमेध्यम् । तदपहन्ति । उद्धन्ति । तस्मादोषधयः पराभवन्ति (९)।१३

मूलं छिनत्ति । भ्रातृव्यस्यैव मूलं छिनत्ति । मूलं वा अतितिष्ठद्रक्षाःस्यनूत्पिपते । यद्वस्तेन च्छिन्द्यात् । कुनखिनीं प्रजाः स्युः । स्फ्येन च्छिनत्ति । वज्रो वै स्फ्यः । वज्रेणैव यज्ञाद्रक्षाःस्यपहन्ति ॥ पितृदेव-१६ त्याऽतिखाता । इयती खनति (१०)।

प्रजापतिना यज्ञमुखेन संमिताम् ॥ वेदिर्देवेभ्यो निलायत । ता चतुरङ्गुलेऽन्वविन्दन् । तस्माच्चतुरङ्गुलं खेया । चतुरङ्गुलं खनति ।१९ चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति । आ प्रतिष्ठायै खनति । यजमानमेव प्रतिष्ठां गमयति । दक्षिणतो वर्षीयसीं करोति । देवयजनस्यैव रूपमकः (११)। २

पुरीषवतीं करोति । प्रजा वै पशवः पुरीषम् । प्रजयैवैनं पशुभिः पुरीषवन्तं करोति । उत्तरं परिग्राहं परिगृह्णाति । एतावती वै पृथिवी यावती वेदिः । तस्या एतावत एव भ्रातृव्यं निर्भज्य । आत्मन उत्तरं परिग्राहं ५ परिगृह्णाति ॥ ऋतमस्यृतसदनमस्यृतश्रीरसीत्याह । यथायजुरेवैतत् (१२)।

क्रूरमिव वा एतत् करोति । यद्वेदिं करोति । धा असि स्वधा असीति योयुप्यते शान्त्यै । उर्वी चासि वस्वी चासीत्याह । उर्वीमेवैनां वस्वीं ८ करोति । पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय । उदादाय पृथिवीं जीरदानुर्यामैरयन्चन्द्रमसि स्वधाभिरित्याह । यदेवास्या अमेध्यम् । तदपहत्य । मेध्यां देवयजनीं कृत्वा (१३)। ११

यदुदश्चन्द्रमसि मेध्यम् । तदस्यामेरयति । तां धीरासो अनुदृश्य यजन्त इत्याहानुख्यात्यै । प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । स्रुवं च

१४ सुते॒श्च सम्मृ॑ट्टिः । पत्नी॑४ सन्नंह्य । आज्ये॑नोदेहीत्या॑हानुपूर्वतायै । प्रोक्ष
णी॑रासा॑दयति । आपो॒ वै र॑क्षो॒घ्नी ( १४ )।

रक्षसामपहत्यै ॥ स्फ्यस्य॒ वर्त्म॑न्त्सादयति । यज्ञस्य॒ संतत्यै ॥ उवान्
१७हासितो देवल । एतावंती॒र्वा अ॒मुष्मि॑ल्लो॒क आप आसन् । याव॑ती॒ प्रोक्ष
णीरिति॑ । तस्माद्व॒ह्वीरासा॑द्यां । स्फ्यमुदस्य॑न् । य द्विष्यात् त ध्यायेत् ।
शु॒चैवैनमर्पयति ( १५ ) ॥ ९ १९

॥ इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वितीयाध्याये नवमोऽनुवाक ॥

✓No 6 E

Taittiriyabrahmana III x 9

प्र॒जाप॑तिर्दे॒वान॑सृजत । ते पा॒प्मना॑ सदिता अजायन्त । तान् व्य॑द्यत् ।
यद्व्यद्यत् । तस्मा॑द्वियुत् । तम॑वृश्चत् । यदवृश्चत् । तस्मा॒द्वृष्टिः । तस्मा
३ यत्रै॒ते दे॒वते॑ अभि॒प्राप्नुत । वि ह॑ हैवास्य॒ तत्र॑ पाप्मा॑नं॒ वर्त ( १ )।

वृश्चतश्च । सैषा मीमा॑ꣳसाऽग्निहोत्र एव संपन्ना ॥ अथो॑ आहु॒ । सर्वे॑षु
यज्ञक्रतुष्विति॑ । होष्यन्नप उपस्पृशेत् । विद्युद॑सि विद्य॑ मे पाप्मा॑नमिति॑।
६ अथ हुत्वोपस्पृशेत् । वृष्टि॑रसि वृश्च मे पाप्मा॑नमिति । यक्ष्यमा॑णो वेष्टा
वा । वि ह॑ हैवास्यै॒ते दे॒वते॑ पाप्मानं॒ वर्त (२)।

वृश्चतश्च ॥ अरुणो ह हाऽऽरुणि । ब्रह्मचारिणे प्रश्नान् प्रोच्य
९ प्रजिघाय । परे॑हि । प्लक्ष दय्यांपातिं पृच्छ । वेत्थ सावित्रा३न्न वेत्था३
इति॑ । तमा॒गत्य॑ पप्रच्छ । आचार्यो॑ मा प्राहै॑षीत । वेत्थ सावित्रा३ न्न
वेत्था३ इति॑ । स हो॑वाच वेदेति॑ (३)।

१२ स कस्मिन् प्रतिष्ठित इति॑ । परोरजसीति॑ । कस्तद्यत् परोरजा इति॑ ।
एष वाव स परोरजा इति॑ होवाच । य एष तपति । एषोऽर्वाग्रजा इति॑ ॥
स कस्मिन् न्वेष इति॑ ।सत्य इति॑ । किं तत् सत्यमिति । तप इति॑ (४)।

१५ कस्मिन् नु तप इति॑ । बल इति॑। किं तद्बलमिति । प्राण इति॑ । मा स्म
प्राणमतिपृच्छ इति॑ माऽऽचार्योऽब्रवीदिति॑ होवाच ब्रह्मचारी ॥ स हो॑वाच

प्लक्षो दय्यांपातिः। यद्वै ब्रह्मचारिन् प्राणमत्यमक्ष्यः। मूर्धा ते व्यपतिष्यत्। अहमुत आचार्याच्छ्रेयान् भविष्यामि। यो मां सावित्रे समवादिष्ठेति (५)। १८

तस्मात् सावित्रे न संवदेत। स यो ह वै सावित्रं विदुषा सावित्रे संवदते। सहास्मिन्निन्द्रियं दधाति। अनु ह वा अस्मा असौ तपन्निन्द्रियं मन्यते। अन्वस्मै श्रीस्तपो मन्यते। अन्वस्मै तपो बलं मन्यते। अन्वस्मै बलं प्राणं मन्यते॥ स यदाह। सञ्ज्ञानं विज्ञानं दर्शादृष्टेति। एष एव तत् (६)। २१ २४

अथ यदाह। प्रस्तुतं विष्टुतꣳ सुता सुन्वतीति। एष एव तत्। एष ह्येव तान्यहानि। एष रात्रयः॥ अथ यदाह। चित्रः केतुर्दाता प्रदाता सविता प्रसविताऽभिशास्ताऽनुमन्तेति। एष एव तत्। एष ह्येव तेऽह्नो मुहूर्ताः। एष रात्रेः (७)॥ २७

अथ यदाह। पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति। एष एव तत्। एष ह्येव तेऽर्धमासाः। एष मासाः॥ अथ यदाह। अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर इति। एष एव तत्। एष ह्येव ते यज्ञक्रतवः। एष ऋतवः (८)। ३०

एष संवत्सरः॥ अथ यदाह। इदानीं तदानीमिति। एष एव तत्। एष ह्येव ते मुहूर्तानां मुहूर्ताः॥ जनको ह वैदेहः। अहोरात्रैः समाजगाम। तꣳ होचुः। यो वा अस्मान् वेद। विजहत् पाप्मानमेति (९)। ३३

सर्वमायुरेति। अभि स्वर्गं लोकं जयति। नास्यामुष्मिꣳल्लोकेऽन्नं क्षीयत इति। विजहद्ध वै पाप्मानमेति। सर्वमायुरेति। अभि स्वर्गं लोकं जयति। नास्यामुष्मिꣳल्लोकेऽन्नं क्षीयते। य एवं वेद॥ अहीना हाऽऽश्वथ्यः। सावित्रं विदांचकार (१०)॥ ३६ ३९

स ह हꣳसो हिरण्मयो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्। हꣳसो ह वै हिरण्मयो भूत्वा। स्वर्गं लोकमेति। आदित्यस्य

४३ सायुज्यम् । य एव वेद ॥ देवभागो ह श्रौतर्ष । सावित्रं विदांचकार । तꣳ ह वागदृश्यमानाऽभ्युवाच (११)।

सर्वं बत गौतमो वेद । य सावित्रं वेदेति । स होवाच । कैषा वागसीति।

४५ अयमहꣳ सावित्रं । देवानामुत्तमो लोक । गुह्यं महो बिभ्रदिति । एतावति ह गौतम । यज्ञोपवीतं कृत्वाऽधो निपपात ॥ नमो नम इति(१२)।

स होवाच । मा भैषीर्गौतम । जितो वै ते लोक इति । तस्माये के च

४८ सावित्रं विदु सर्वे ते जितलोका ॥ स यो ह वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाऽभिषिक्तं वेद । श्रिया हैवाभिषिच्यते । घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि । आदित्य इति त्रीणि (१३)।

५१ एतद्वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाऽभिषिक्तम् । य एव वेद । श्रिया हैवाभिषिच्यते । तदेतदृचाऽभ्युक्तम्—

ऋचो अक्षरे परमे व्योमन् । यस्मिन् देवा अधि विश्वे निषेदु ।

५४ यस्त न वेद किमृचा करिष्यति । य इत् तद्विदुस्त इमे समासत इति॥ न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति । य सावित्रं वेद (१४)॥

तदेतत् परि यदेवचक्रम् । आर्द्रं पिन्वमानꣳ स्वर्गं लोक एति । विज-

५७ हद्विश्वा भूतानि सपश्यत् । आर्द्रो ह वै पिन्वमान । स्वर्गं लोक एति । विजहन् विश्वा भूतानि सपश्यन् । य एव वेद ॥ शूषो ह वै वार्ष्णेय । आदित्येन समाजगाम । तꣳ होवाच । एहि सावित्रं विद्धि । अथ वै

६० स्वर्ग्योऽसि । पारयिष्णुरमृतात् सभूत इति । एष वाव स सावित्र । य एष तपति । एहि मा विद्धि । इति हैवैऽन तदुवाच (१५)॥

॥ इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये नवमोऽनुवाक ॥

## No. 7

Kausītakibrāhmana XII 111

माध्यमा सरस्वत्या सत्रमासत । तद्धापि कवषो मध्ये निषसाद । त हेम उदोदुर्दास्या वै त्व पुत्रोऽसि न वय त्वया सह भक्षयिष्याम इति ।

स ह क्रुद्धः प्रद्रवन्सरस्वतीमेतेन सूक्तेन तुष्टाव । तं हेयमन्वेयाय । तत ३
उ हेमे निरागा इव मेनिरे । तं हान्वावृत्योचुर्ऋषे नमस्तेऽस्तु मा नो
हिंसीः त्वं वै नः श्रेष्ठोऽसि यं त्वेयमन्वेतीति । तं ह ज्ञपयांचक्रुस्तस्य ह क्रोधं
विनिन्युः । स एष कवषस्यैव महिमा सूक्तस्य चानुवेदिता । अथ यत्सह ६
पत्नीभिर्यन्ति गन्धर्वा ह वा इन्द्रस्य सोममप्सु प्रत्यायिता गोपायन्ति ।
त उ ह स्त्रीकामास्ते हासु मनांसि कुर्वते तद्यथा प्रमत्तानां यज्ञमाहरे-
देवम् । तदुपनामुक उ एवैनं यज्ञो भवति य एवं वेद । विंशतिमन्वाह ता ९
विराजमभिसंपद्यन्ते । वैराजीर्वा आपोऽन्नं विराडन्नमापोऽन्नेन तदन्नाद्यं
समर्धयति । त्रिः प्रथमया त्रिरुत्तमया चतुर्विंशतिः संपद्यन्ते ।
चतुर्विंशत्यक्षरा गायत्री । गायत्री प्रातःसवनं वहति । तद्ध ह १२
प्रातःसवनरूपा न्वाप इतीति न्वा अपोनप्त्रीयस्य ॥

## No. 7 A

### Kausitakibrāhmana XVII. vii

पुरुषो वै यज्ञस्तस्य शिरः एव हविर्धाने मुखमाहवनीय उदरं सदोऽन्न-
मुक्थानि बाहू मार्जालीयश्चाग्नीध्रियश्च या इमा अन्तर्देवतास्तेऽन्तःसदसं
धिष्ण्याः प्रतिष्ठा गार्हपत्यव्रतश्रपणाविति । अथापरं तस्य मन एव ब्रह्मा ३
प्राण उद्गातापानः प्रस्तोता व्यानः प्रतिहर्ता वाग्घोता चक्षुरध्वर्युः प्रजातिः
सदस्य आत्मा यजमानोऽङ्गानि होत्राशंसिनः । तद्यदध्वर्युः स्तोत्रमुपा-
करोति चक्षुरेव तत्प्राणैः संदधात्यथो अपानमेव तन्मनसा संतनोति । ६
अथ यत्प्रस्तोता ब्रह्माणमामन्त्रयते ब्रह्मन्स्तोष्यामः प्रशास्तारिति मनो वा
अग्रणीर्भवत्येषा प्राणाना मनसा प्रसूताः स्तोमेन स्तुयामेत्यथो अपानमेव
तन्मनसा संतनोति । अथ यद्ब्रह्मा स्तोत्रमनुमन्यते मन एव तत्प्राणैः ९
संदधात्यथो अपानमेव तन्मनसा संतनोति । अथ यत्प्रस्तोता प्रस्तौत्यपान-
मेव तत्प्राणे दधात्यथ यदुद्गातोद्गाति प्राणमेव तद्व्याने दधात्यथ यत्प्रति-
हर्ता प्रतिहरति व्यानमेव तत्प्राणे दधात्येवमेवैताः सर्वा देवताः प्राण एव १२
प्रतिष्ठिताः । अथ यद्धोता साम्ना शस्त्रमुपसंतनोति वाग्वै होता वाचमेव

तौ होचतुः । श्रद्धादेवो वै मनुः । आवं नु वेदावेति । तौ हाग-
त्योचतुः । मनो याजयाव त्वेति । केनेति । अनेनर्षभेणेति । तथेति । ६
तस्यालब्धस्य सा वागपचक्राम ॥ १५ ॥

सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र वदन्त्यै
शृण्वन्ति ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति । ते हासुराः ९
समूदिरे । इतो वै नः पापीयः सचते । भूयो हि मानुषी वाग्वदतीति ।
किलाताकुली हैवोचतुः । श्रद्धादेवो वै मनुः । आवं न्वेव वेदावेति ।
तौ हागत्योचतुः । मनो याजयाव त्वेति । केनेति । अनयैव जाय- १२
येति । तथेति । तस्या आलब्धायै सा वागपचक्राम ॥ १६ ॥

सा यज्ञमेव यज्ञपात्राणि प्रविवेश । ततो हैनां न शेकतुर्निर्हन्तुम् ।
सैषा सुरघ्नी वागुद्वदति । स यस्य हैवं विदुष एतामत्र वाचं प्रत्युद्वाद- १५
यन्ति पापीयांसो हैवास्य सपत्ना भवन्ति ॥ १७ ॥

स समाहन्ति । कुक्कुटोऽसि मधुजिह्व इति । मधुजिह्वो वै स
देवेभ्य आसीद्विषजिह्वोऽसुरेभ्यः । स यो देवेभ्य आसीः स न एधी- १८
त्येवैतदाहेषमूर्जमावद । त्वया वयं संघातं संघातं जेष्मेति । नात्र
तिरोहितमिवास्ति ॥ १८ ॥

अथ शूर्पमादत्ते । वर्षवृद्धमसीति । वर्षवृद्धं ह्येतद्यदि नडानां यदि २१
वेणूना यदीषीकाणां वर्षमु ह्येवैता वर्धयति ॥ १९ ॥

## No. 8 A

Śatapathabrahmana I. ii 5 1–7

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे । ततो देवा
अनुव्यमिवासुः । अथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवन-
मिति ॥ १ ॥

ते होचुः । हन्तेमां पृथिवीं विभजामहै । तां विभज्योपजीवामेति ।
तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो विभजमाना अभीयुः ॥ २ ॥

६ तद्वै॒ देवा॒ः शुश्रुवुः । वि॒भजन्ते ह वा॒ऽइमाम॒सुराः पृथिवीम् । प्रेत
त॒देष्या॒मो य॒त्रेमाम॒सुरा विभ॒जन्ते । के त॒तः स्याम य॒दस्यै न भ॒जेम-
ही॒ति । ते॒ यज्ञमेव वि॒ष्णुं पुरस्कृत्ये॒युः ॥ ३ ॥

९ ते॒ होचुः । अ॒नु नोऽस्या॒ पृथिव्याम॒ाभजत । अ॒स्त्वेव नो॒ऽप्यस्या
*भाग इ॒ति । ते हा॒सुरा असूय॒न्त इवोचुः । या॒वदे॒वैष वि॒ष्णुरभिशे॒ते*
तावद्वो दद्म इ॒ति ॥ ४ ॥

१२ वामनो॒ ह वि॒ष्णुरास । त॒द्देवा न॒ जिहीडिरे । महद्वै॒ नोऽदुर्ये॒ नो
यज्ञ॒संमितम॒दुरि॒ति ॥ ५ ॥

अथ यदेव प्रजामिच्छेत । तेन पितृभ्य ऋणं जायते । तद्धयेभ्य एतत् करोति यदेषां संततान्यवच्छिन्ना प्रजा भवति ॥ ४ ॥

अथ यदेव वासयेत । तेन मनुष्येभ्य ऋणं जायते । तद्धयेभ्य एतत् करोति यदेनान् वासयते यदेभ्योऽशनं ददाति । स य एतानि सर्वाणि करोति स कृतकर्मा तस्य सर्वमाप्तं सर्वं जितम् ॥ ५ ॥

## No 8 C 

Satapathabrāhmana II v 1. 1–17

प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत कथं नु प्रजायेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । स प्रजा असृजत । ता अस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि वयांसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वा अयं पुरुषस्तस्माद्द्विपादो वयांसि ॥ १ ॥

स ऐक्षत प्रजापतिः । यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्येतर्ह्येक एवास्मीति । स द्वितीयाः ससृजे ता अस्य परैव बभूवुस्तदिदं क्षुद्रं सरीसृपं यदन्यत् सर्पेभ्यस्तृतीयाः ससृज इत्याहुस्ता अस्य परैव बभूवुस्त इमे सर्पा एता ह न्वेव द्वयीर्याज्ञवल्क्य उवाच त्रयीरु तु पुनरृचा ॥२॥

सोऽर्चञ्छ्राम्यन्प्रजापतिरीक्षां चक्रे । कथं नु मे प्रजाः सृष्टाः पराभवन्तीति । स हैतदेव ददर्शानशनतया वै मे प्रजाः पराभवन्तीति । स आत्मन एवाग्रे स्तनयोः पय आप्याययां चक्रे । स प्रजा असृजत । ता अस्य प्रजाः सृष्टा स्तनावेवाभिपद्य तास्ततः संबभूवुस्ता इमा अपराभूताः ॥ ३ ॥

तस्मादेतदृषिणाभ्यनूक्तम् । प्रजा ह तिस्रो अत्यायमीयुरिति । तया पराभूतास्ता एवैतदभ्यनूक्तं न्यन्या अर्कमभितो विविश्र इत्यग्निर्वा अर्कस्तया इमाः प्रजा अपराभूतास्ता अग्निमभितो निविष्टास्ता एवैतदभ्यनूक्तम् ॥ ४ ॥

महद्ध तस्थौ भुवनेष्वन्तरिति । प्रजापतिमेवैतदभ्यनूक्तं पवमानो हरित आविवेशेति दिशो वै हरितस्ता अयं वायुः पवमान आविष्टस्ता

स ऐक्षत प्रजापतिः । पुरा मे पूर्वाः प्रजा अभूवन्निमा उ चेदिमे
विमश्नुते न ततः किंचन परिशेक्ष्यत इति । तेभ्य एतं भागमकल्पयदेतं
मारुतं सप्तकपालं पुरोडाशं स एष मारुतः सप्तकपालस्तद्यत् सप्त- ४५
कपालो भवति सप्त सप्त हि मारुतो गणस्तस्मान्मारुतः सप्तकपालः
पुरोडाशो भवति ॥ १३ ॥

तं वै स्वतवोभ्य इति कुर्यात् । स्वयं हि त एतं भागमकुर्वत नेतो ४८
स्वतवोभ्यो याज्यानुवाक्ये न विन्दन्ति । स उ खलु मारुत एव स्यात्
स वा एष प्रजाभ्य एवाहिंसायै क्रियते तस्मान्मारुतः ॥ १४ ॥

अथातः पयस्यैव । पयसो वै प्रजाः संभवन्ति पयसः संभूतास्तद्यत ५१
एव संभूता यतः सभवन्ति तदेवाभ्य एतत् करोति । तथाः पूर्वैर्हविर्भिः
प्रजाः सृजते ता एतस्मात् पयसः एतस्यै पयस्यायै संभवन्ति ॥ १५ ॥

तस्या मिथुनमस्ति । योषा पयस्या रेतो वाजिनं तस्मान्मिथुनाद्वि- ५४
श्वमसंमितमनु प्राजायत । तद्यदेतस्मान्मिथुनाद्विश्वमसमितमनु प्राजायत
तस्माद्वैश्वदेवी भवति ॥ १६ ॥

अथ द्यावापृथिव्य एककपालः पुरोडाशो भवति । एतैर्वै हविर्भिः ५७
प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्या पर्यगृह्णात् । ता इमा द्यावा-
पृथिवीभ्या परिगृहीतास्तथो एवैष एतच्च एतैर्हविर्भिः प्रजाः सृजते ता
द्यावापृथिवीभ्या परिगृह्णाति तस्माद्द्यावापृथिव्य एककपालः पुरोडाशो ६०
भवति ॥ १७ ॥

## No. 8 D

Satapathabrahmana III. vi. 2 2-8

दिवि वै सोम आसीत् । अथेह देवाः । ते देवा अकामयन्ता । नः
सोमो गच्छेत् । तेनागतेन यजेमहीति । तऽएते मायेऽअसृजन्त सुपर्णी
च कद्रूं च । वागेव सुपर्णीय कद्रूः । ताभ्या समदं चक्रुः ॥ २ ॥

ते हऽर्तीगमानेऽऊचतुः । यतरा नौ दवीयः परापश्यदात्मानं नौ सा
जयादिति । तथेति सा ह कद्रूरुवाच । परेक्षस्वेति ॥ ३ ॥

६ सा ह सुपर्ण्युवाच । अस्य सलिलस्य पारेऽश्वः श्वेत स्थाणौ सेवते। तमहं पश्यामीति । तमेव त्वं पश्यसीति । त हीति । अथ ह कद्रूरुवाच । तस्य वालो न्यषञ्जि । तममु वातो धूनोति । तमह पश्यामीति ॥ ४ ॥

९ सा यत् सुपर्ण्युवाच । अस्य सलिलस्य पारऽइति । वेदिर्वै सलिलम् । वेदिमेव सा तदुवाच । अश्वः श्वेत स्थाणौ सेवत इति । अग्निर्वा अश्वः श्वेतः । यूप स्थाणुः । अथ यत् कद्रूरुवाच । तस्य वालो न्यषञ्जि । १२ तममुं वातो धूनोति । तमह पश्यामीति । रशना हैव सा ॥ ५ ॥

सा ह सुपर्ण्युवाच । एहीद पताव वेदितु यतरा नौ जयतीति । सा ह कद्रूरुवाच । त्वमेव पत । त्व वै न आख्यास्यसि यतरा नौ जय-१५तीति ॥ ६ ॥

मृदब्रवीत् । क्वाहं भवानीति । तप्यस्वेत्यब्रवीत् । सातप्यत । सा ९
सिकता असृजत । एतद्वै मृत्तप्यते यदेनां विकृषन्ति । तस्माद्यद्यपि
सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवति । एतावन्नु तद्यत् क्वाहं भवानि
क्वाहं भवानीति ॥ ४ ॥ १२

सिकताभ्यः शर्करामसृजत । तस्मात् सिकताः शर्करैवान्ततो
भवन्ति । शर्कराया अश्मानम् । तस्माच्छर्कराश्मैवान्ततो भवति ।
अश्मनोऽयः । तस्मादश्मनोऽयो धमन्ति । अयसो हिरण्यम् । तस्मा- १५
दयो बहुध्मातं हिरण्यसंकाशमिवैव भवति ॥ ५ ॥

तद्यदसृजताक्षरत् । तद्यदक्षरत् तस्मादक्षरम् । यदष्टौ कृत्वोऽक्षरत्
सैवाष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥ १८

अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत् । तामप्रथयत् । सा पृथिव्य-
भवत् । तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरा-
यादीक्षन्त । भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥ ७ ॥ २१

तद्यानि तानि भूतानि ऋतवस्ते । अथ यः स भूतानां पतिः
संवत्सरः सः । अथ या सोषाः पत्न्यौषसी सा । तानीमानि भूतानि
च भूतानां च पतिः संवत्सरऽउषसि रेतोऽसिञ्चन् । स संवत्सरे २४
कुमारोऽजायत । सोऽरोदीत् ॥ ८ ॥

तं प्रजापतिरब्रवीत् । कुमार किं रोदिषि यच्छ्रमात्तपसोऽधि जातो-
ऽसीति । सोऽब्रवीत् । अनपहतपाप्मा वाऽअस्म्यहितनामा नाम मे २७
धेहीति । तस्मात् पुत्रस्य जातस्य नाम कुर्यात् । पाप्मानमे-
वास्य तदपहन्ति । अपि द्वितीयमपि तृतीयमभिपूर्वमेवास्य तत् पाप्मान-
मपहन्ति ॥ ९ ॥ ३०

तमब्रवीत् । रुद्रोऽसीति । तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवत् ।
अग्निर्वै रुद्रः । यदरोदीत् तस्माद्रुद्रः । सोऽब्रवीत् । ज्यायान् वाऽअ-
तोऽस्मि । धेह्येव मे नामेति ॥ १० ॥ ३३

तमब्रवीत् । सर्वोऽसीति । तद्यदस्य तन्नामाकरोदापस्तद्रूपमभवन् । आपो वै सर्वं । अद्भ्यो हीदं सर्वं जायते । सोऽब्रवीत् । ज्यायान्
३६ वाऽअतोऽस्मि । धेह्येव मे नामेति ॥ ११ ॥

तमब्रवीत् । पशुपतिरसीति । तद्यदस्य तन्नामाकरोदोषधयस्तद्रूपमभवन् । ओषधयो वै पशुपतिः । तस्माद्यदा पशव ओषधीर्लभन्तेऽथ पतीयन्ति ।
३९ सोऽब्रवीत् । ज्यायान् वाऽअतोऽस्मि । धेह्येव मे नामेति ॥ १२ ॥

तमब्रवीत् । उग्रोऽसीति । तद्यदस्य तन्नामाकरोद्वायुस्तद्रूपमभवत् । वायुर्वा उग्रः । तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः । सोऽब्रवीत् ।
४२ ज्यायान् वाऽअतोऽस्मि । धेह्येव मे नामेति ॥ १३ ॥

तमब्रवीत् । अशनिरसीति । तद्यदस्य तन्नामाकरोद्विद्युत्तद्रूपमभवत् । विद्युद्वा अशनिः । तस्माद्य विद्युद्धन्त्यशनिरवधीदित्याहुः । सोऽब्रवीत् ।
४५ ज्यायान् वाऽअतोऽस्मि । धेह्येव मे नामेति ॥ १४ ॥

तमब्रवीत् । भवोऽसीति । तद्यदस्य तन्नामाकरोत् पर्जन्यस्तद्रूपमभवत् । पर्जन्यो वै भवः । पर्जन्याद्धीदं सर्वं भवति । सोऽब्रवीत् ।
४८ ज्यायान् वाऽअतोऽस्मि । धेह्येव मे नामेति ॥ १५ ॥

तमब्रवीत् । महान् देवोऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत् । प्रजापतिर्वै चन्द्रमाः । प्रजापतिर्वै महान् देवः । सोऽब्र
५१ वीत् । ज्यायान् वाऽअतोऽस्मि । धेह्येव मे नामेति ॥ १६ ॥

तमब्रवीत् । ईशानोऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रूपमभवत् । आदित्यो वाऽईशानः । आदित्यो ह्यस्य सर्वस्येष्टे । सोऽब्रवीत् ।
५४ एतावान् वाऽअस्मि । मा मेतः परो नाम धा इति ॥ १७ ॥

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥

यद्वेवाष्टावग्निरूपाणि । अष्टाक्षरा गायत्री । तस्मादाहुर्गायत्रोऽग्नि

रिति । सोऽय कुमारो रूपाण्यनुप्राविशत् । न वाऽअग्निं कुमारमिव ५७
पश्यन्ति । एतान्येवास्य रूपाणि पश्यन्ति । एतानि हि रूपाण्यनुप्रा-
विशत् ॥ १९ ॥

तमेत संवत्सर एव चिनुयात् । सवत्सरेऽनुब्रूयात् । द्वयोरित्यु हैकऽ-६०
आहुः । संवत्सरे वै तद्रेतोऽसिञ्चन्त सवत्सरे कुमारोऽजायत । तस्माद्
द्वयोरेव चिनुयात् । द्वयोरनुब्रूयादिति । सवत्सरे त्वेव चिनुयात् ।
संवत्सरेऽनुब्रूयात् । यद्वाव रेतः सिक्त तदेव जायते । ६३
तत्ततो विक्रियमाणमेव वर्धमान शेते । तस्मात् संवत्सरऽएव चिनुयात् ।
संवत्सरेऽनुब्रूयात् । तस्य चितस्य नाम करोति पाप्मानमेवास्य तदप-
हन्ति । चित्रनामान करोति चित्रोऽसीति । सर्वाणि हि ६६
चित्राण्यग्निः ॥ २० ॥

## No 8 F

Satapathabrāhmana X. vi 4 1-2

उषा वाऽअश्वस्य मेध्यस्य शिर. । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्नि-
र्वैश्वानरः । संवत्सर आत्माश्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरं पृथिवी
पाजस्य दिशः पार्श्वेऽवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमा- ३
साश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मासानि ऊवध्यं
सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वताः ओषधयश्च वन-
स्पतयश्च लोमानि उद्यन् पूर्वार्धः निम्लोचन् जघनार्धः यद् विजृम्भते ६
तद् विद्योतते यद् विधूनुते तत् स्तनयति यन्मेहति तद् वर्षति वागे-
वास्य वाक् ॥ १ ॥ अहर्वाऽअश्व पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे
योनिः । रात्रिरेन पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिः । एतौ ९
वाऽअश्वं महिमानावभित. संबभूवतुः । हयो भूत्वा देवानवहत् वाजी
गन्धर्वान् अर्वा असुरान् अश्वो मनुष्यान् । समुद्र एवास्य बन्धुः
समुद्रो योनिः ॥ २ ॥

## No 8 G 

Satapathabrāhmana XI v 4 1-18

ब्रह्मच॒र्यमा॒गामि॒त्याह । ब्र॒ह्मणऽए॒वैतदात्मा॒न नि॒वेदयति । ब्रह्मचा॒र्यसा-
नी॒त्याह । ब्र॒ह्मणऽए॒वैत॒दात्मा॒न प॒रिददाति । अ॒थैनमाह । को ना॒मा-
३ सी॒ति । प्रजा॒पतिर्वै क॒. । प्राजा॒पत्य॒मेवैन त॒त्कृत्वो॒पनयते ॥ १ ॥

अ॒थास्य ह॒स्त गृह्णाति । इन्द्रस्य ब्रह्मचा॒र्यसि । अग्नि॒राचा॒र्यस्त॒वा-
ह॒माचा॒र्यस्त॒वासावि॒ति । एते वै श्रे॒ष्ठे ब॒लिष्ठे देव॒ते । एत॒भ्यामेवैन
६ श्रे॒ष्ठाभ्या ब॒लिष्ठाभ्या देव॒ताभ्या प॒रिददाति । त॒था हास्य ब्रह्मचारी न
का॒चना॒र्तिमा॒र्च्छति । न स य॒ एव वेद ॥ २ ॥

अथास्मै सावित्रीमन्वाह । तां ह स्मैतां पुरा संवत्सरेऽन्वाहुः । संव- २४
त्सरसंमिता वै गर्भाः प्रजायन्ते ।जातऽएवास्मिंस्तद्वाचं दध्म इति॥ ६॥
अथ षट्सु मासेषु । षड् वाऽऋतवः संवत्सरस्य । संवत्सरसंमिता
वै गर्भाः प्रजायन्ते । जातऽएवास्मिंस्तद्वाचं दध्म इति ॥ ७ ॥ २७
अथ चतुर्विंशत्यहे । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः । संवत्सरसं-
मिता वै गर्भाः प्रजायन्ते । जातऽएवास्मिंस्तद्वाचं दध्म इति ॥ ८ ॥
अथ द्वादशाहे । द्वादश वै मासाः संवत्सरस्य । संवत्सरसंमिता वै ३०
गर्भाः प्रजायन्ते । जातऽएवास्मिंस्तद्वाचं दध्म इति ॥ ९ ॥
अथ षडहे । षड् वाऽऋतवः संवत्सरस्य । संवत्सरसंमिता वै गर्भाः
प्रजायन्ते । जातऽएवास्मिंस्तद्वाचं दध्म इति ॥ १० ॥ ३३
अथ त्र्यहे । त्रयो वाऽऋतवः संवत्सरस्य। संवत्सरसंमिता वै गर्भाः
प्रजायन्ते । जातऽएवास्मिंस्तद्वाचं दध्म इति ॥ ११ ॥ ३६

तदपि श्लोकं गायन्ति ।

आचार्यो गर्भी भवति हस्तमाधाय दक्षिणम् ।
तृतीयस्यां स जायते सावित्र्या सह ब्राह्मणः ॥ इति ।

सद्यो ह त्वाव ब्राह्मणायानुब्रूयात्। आग्नेयो वै ब्राह्मणः । सद्यो वा ३९
ऽअग्निर्जायते । तस्मात् सद्य एव ब्राह्मणायानुब्रूयात् ॥ १२ ॥
तां हैतामेके सावित्रीमनुष्टुभमन्वाहुः । वाग् वाऽअनुष्टुप् ।तद्स्मिन्
वाचं दध्म इति । न तथा कुर्यात् । यो हैनं तत्र ब्रूयादा न्वाऽअय- ४२
मस्य वाचमदित मूको भविष्यतीतीश्वरो ह तथैव स्यात् । तस्मादेतां
गायत्रीमेव सावित्रीमनुब्रूयात् ॥ १३ ॥
अथ हैके दक्षिणतः। तिष्ठते वासीनाय वान्वाहुः । न तथा कुर्यात् । ४५
यो हैनं तत्र ब्रूयाद्बुल्वं न्वाऽअयमिममजीजनत बुल्वो भविष्यतीतीश्वरो
ह तथैव स्यात् ।तस्मात् पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात् ॥१४॥
तां वै पच्छोऽन्वाह । त्रयो वै प्राणाः प्राण उदानो व्यानः । ४८
तानेवास्मिंस्तद्दधाति । अथार्धर्चशः । द्वौ वाऽइमौ प्राणौ प्राणोदानावेव ।

प्राणोदानावेवास्मिंस्तद्दधाति । अथ कृत्स्नाम् । एको वाऽअयं प्राणः
५१ कृत्स्न एव । प्राणमेवास्मिंस्तत्कृत्स्नं दधाति ॥ १५ ॥

तदाहुः । न ब्राह्मणं ब्रह्मचर्यमुपनीय मिथुनं चरेत् । गर्भो वाऽएष
भवति यो ब्रह्मचर्यमुपैति । नेदिमं ब्राह्मणं विविक्ताद्रेतसो जनया-
५४ नीति ॥ १६ ॥

तदु वाऽआहुः । काममेव चरेत् । द्वय्यो वाऽइमाः प्रजाः दैव्यश्चैव
मानुष्यश्च । ता वाऽइमा मानुष्यः प्रजाः प्रजननात् प्रजायन्ते ।
५७ छन्दांसि वै दैव्यः प्रजाः । तानि मुखतो जनयते । तत एतं
जनयते । तस्मादु काममेव चरेत् ॥ १७ ॥

तदाहुः । न ब्रह्मचारी सन् मध्वश्नीयात् । ओषधीना वाऽएष परमो
६० रसो यन्मधु । नेदन्नायस्यान्तं गच्छानीति । अथ ह स्माह श्वेतकेतुरा-
रुणेयो ब्रह्मचारी सन् मध्वश्नन् । त्रय्यै वाऽएतद्विद्यायै शिष्टं यन्मधु ।
स तु रसो यस्येदृक्शिष्टमिति । यथा ह वाऽऋचं वा यजुर्वा साम
६३ वाभिव्याहरेत् तादृक् तद् एवं विद्वान् ब्रह्मचारी सन् मध्वश्नाति ।
तस्मादु काममेवाश्नीयात् ॥ १८ ॥

## No 8 H

Satapathabrāhmana XI v 7 1-10

अथातः स्वाध्यायप्रशंसा । प्रिये स्वाध्यायप्रवचने भवतो युक्तमना
भवत्यपराधीनोऽहरहरर्थान्त्साधयते । सुखं स्वपिति परमचिकित्सक
३ आत्मनो भवति । इन्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्यशो लोक-
पक्तिः । प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति—ब्राह्मण्यं
प्रतिरूपचर्यां यशो लोकपक्तिम् । लोक. पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं
६ भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च ॥ १ ॥

ये ह वै के च श्रमा इमे द्यावापृथिवीऽअन्तरेण स्वाध्यायो हैव
९ तेषां परमता काष्ठा य एवं विद्वान्त्स्वाध्यायमधीते । तस्मात् स्वाध्यायोऽ-
ध्येतव्यः ॥ २ ॥

यद् यद्ध वाऽअयं छन्दसः स्वाध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टं भवति य एवं विद्वान्त्स्वाध्यायमधीते । तस्मात् स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ १२

यदि ह वा अप्यभ्यक्तः अलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीतऽ आ हैव स नखाग्रेभ्यस्तप्यते य एवं विद्वान्त्स्वाध्यायमधीते । तस्मात् स्वाध्यायोऽध्येतव्यः ॥ ४ ॥ १५

मधु ह वाऽऋचः । घृतं ह सामानि । अमृतं यजूंषि । यद्ध वाऽअयं वाकोवाक्यमधीते क्षीरौदनमांसौदनौ हैव तौ ॥ ५ ॥ १८

मधुना ह वाऽएष देवांस्तर्पयति य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते । तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैःसर्वैर्भोगैः ॥ ६ ॥

घृतेन ह वाऽएष देवांस्तर्पयति य एवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते । तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥ २१

अमृतेन ह वाऽएष देवांस्तर्पयति य एवं विद्वान् यजूंष्यहरहः स्वाध्यायमधीते । तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ८ ॥ २४

क्षीरौदनमांसौदनाभ्यां ह वाऽएष देवांस्तर्पयति य एवं विद्वान् वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते । तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ९ ॥ २७

यन्ति वाऽआपः । एत्यादित्य एति चन्द्रमा यन्ति नक्षत्राणि । यथा ह वाऽएता देवता नेयुर्न कुर्युरेवं हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायं नाधीते । तस्मात् स्वाध्यायोऽध्येतव्यः । तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद् व्रतस्याव्यवच्छेदाय ॥ १० ॥ ३०

## No. 8 I

Satapathabrāhmaṇa XII. v. 2. 1–15

अथ ह स्माह नाको मौद्गल्यः । मरिष्यन्तं चेद् यजमानं मन्येत यत्रैवास्माऽआसन्नं जोषितं स्यात्तदरण्योरग्नी समारोह्य निर्मथ्य

३ जुह्वद् वसेत् । स यदास्माल्लोकात् यजमानः प्रेयात्— १ ॥

अथैनमन्तरेणाग्नींश्चितिं चित्वा तमग्निभिः समुपोषेदिति । तदु तथा न कुर्यात् । अन्तस्थानो वाऽएष तस्मै यदेनं शवदह्यायाऽइव जुहुयुः । ६ यज्ञाय वाऽएष आहुतिभ्यस्तस्थानः । स हैनममुष्यमाणस्तृप् सचते ॥ २ ॥

इत्थमेव कुर्यात् । तिस्र एव स्थालीरेष्टवे ब्रूयात्तासु गोमयानि न ९ शुम्बलानि वावधाय नाना त्रिष्वग्निषु प्रवृञ्ज्यात् । ते यं तत्र सताप दग्नयो जायेरस्तैरेनं दहेयुः । तथाह तैरेव दग्धो भवति नो मत्यक्षमिव ॥ ३ ॥

१२ तस्मादप्येतदृषिणाभ्यनूक्तम् ।

यो अग्निरग्नेरध्यजायत शोकात् पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥ इति

१५ ( वाजसनेयसंहिता 13 45 4 ) यथऽर्त्तथा ब्राह्मणम् ॥ ४ ॥

अथैनं विपुरीषं कृत्वा अस्या पुरीषं प्रतिष्ठापयति । पुरीषं वाऽइयम् ।

तत् पुरीषऽएवैतत्पुरीषं दधाति । या ह वाऽअस्यैषा वृकला सपुरीषा तस्यै १८ ह विदग्धायै सृगालः सम्भवति । नेत् सृगालः सम्भवदिति । तदु तथा न कुर्यात् । क्षोधुका हास्य प्रजा भवति । तमन्तरतः प्रक्षाल्याज्येनान्वनक्ति । मेध्यमेवैनत्तत् करोति ॥ ५ ॥

२१ अथास्य सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान् प्रत्यस्यति । ज्योतिर्वाऽअमृतं हिरण्यम् । ज्योतिरेवास्मिंस्तदमृतं दधाति ॥ ६ ॥

अथैनमन्तरेणाग्नीश्चितिं चित्वा कृष्णाजिनमुत्तरलोम प्राचीनग्रीवं २४ प्रस्तीर्य तस्मिन्नेनमुत्तानं निपाय जुहूं घृतेन पूर्णां दक्षिणे पाणावादधाति सव्यऽउपभृतमुरसि ध्रुवां मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षश्चमसं प्रणीताप्रणयनं पार्श्वयोः शूर्पेऽउदरे पात्रीं सम

वत्तधानी पृषदाज्यवतीं शिश्नस्यान्ते शम्यामाण्डयोरन्ते वृषारवावन्वगुलू- २५
खलं च मुसलं चान्तरेणोरूऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम्
॥ ७ ॥

स एष यज्ञायुधी यजमानो यथा बिभ्यदामोषमतीयादेवमेव योऽस्य ३०
स्वर्गो लोको जितो भवति तमभ्यत्येति । तमेते संताप्या अग्नयो
यथा पुत्राः पितरं प्रोषुषमागतं शिवमुपस्पृशन्त्येवं शिवं हैवैतमुपस्पृ-
शन्ति प्र हैवैनं कल्पयन्ति ॥ ८ ॥ ३३

स यदि गार्हपत्यः पूर्वः प्राप्नुयात् तद् विद्यात् प्रतिष्ठ एनमग्निः पूर्वः
प्रापत् । प्रतिष्ठास्यति मन्येव तेऽस्मिंल्लोके स्थास्यन्ति येऽस्मात् प्रत्यञ्च
इति ॥ ९ ॥ ३६

अथ यद्याहवनीयस्तद् विद्यान्मुख्य एनमग्निः पूर्व प्रापत् । मुखतो
लोकाञ्जैषीन्मुखमेव तेऽस्मिंल्लोके भविष्यन्ति येऽस्मात् प्रत्यञ्च इति
॥ १० ॥ ३९

अथ यद्यन्वाहार्यपचनस्तद् विद्यादन्नाद एनमग्निः पूर्वः प्रापत् ।
अन्नमत्स्यत्यन्नमेव तेऽस्मिंल्लोकेऽत्स्यन्ति येऽस्मात् प्रत्यञ्च इति ॥ ११ ॥

अथ यदि सर्वे सकृत् तद् विद्यात् कल्याणं लोकमजैषीदित्येतान्यस्मिन् ४२
विज्ञानानि ॥ १२ ॥

तां वाऽएतां यजमानात्माहुतिमन्ततो जुहोति । स योऽस्य स्वर्गो
लोको जितो भवति तत आहुतिमयोऽमृतः संभवति ॥ १३ ॥ ४५

अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति तानि ब्राह्मणाय
दद्यात् । शवोद्वहमु ह तं मन्यन्ते यस्तानि प्रतिगृह्णाति । अप एवैना-
न्यभ्यवहरेयुः । आपो वाऽअस्य सर्वस्य प्रतिष्ठा । तदेनमप्स्वेव प्रति- ४८
ष्ठापयति ॥ १४ ॥

अथैतामाहुतिं जुहोति पुत्रो वा भ्राता वा यो वान्यो ब्राह्मणः
स्यात् । ५०

अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहा (वा.सं. ३५. २) । इति
५५ अनपेक्षमेत्याप उपस्पृशन्ति ॥ १५ ॥

 No. 8 J

Śatapathabrāhmaṇa XIII iv 2 1–17

एतस्यां तायमानायामश्वं निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्रार्हं पूर्व्यं यो दक्षिणाया धुर्य-
३ प्रतिधुरः ॥ १ ॥

तद्यत् सर्वरूपो भवति सर्वं वै रूपं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै । अथ यज्जवसमृद्धो वीर्यं वै जवो वीर्यस्याप्त्यै वीर्यस्यावरु-
६ द्ध्यै । अथ यत् सहस्रार्हः सर्वं वै सहस्रं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै । अथ यत् पूर्व्य एष वाऽअपरिमितं वीर्यमभिवर्धते यत् पूर्व्योऽपरिमित येव वीर्यस्यावरुद्ध्यै । अथ यद्दक्षिणाया धुर्यप्रतिधुर
९ एष वाऽएष य एष तपति न वाऽएत कश्चन प्रतिप्रतिरेतस्यै-वावरुद्ध्यै ॥ २ ॥

तद्ध होवाच भाल्लवेयः । द्विरूप एवैषोऽश्व. स्यात् कृष्णसारङ्गः
१२ प्रजापतेर्वाऽएषोऽक्ष्णः समभवत् द्विरूप वाऽइद चक्षुः शुक्लं चैव कृष्ण च तदेनं स्वेन रूपेण समर्धयतीति ॥ ३ ॥

अथ होवाच सात्ययज्ञिः । त्रिरूप एवैषोऽश्वः स्यात् तस्य कृष्णः
१५ पूर्वार्धः शुक्लोऽपरार्धः कृत्तिकाञ्जि पुरस्तात् । तद्यत् कृष्णः पूर्वार्धो भवति यद्देवेदं कृष्णमक्ष्णस्तदस्य तत् । अथ यच्छुक्लोऽपरार्धो यद्देवेद शुक्लमक्ष्णस्तदस्य तत् । अथ यत् कृत्तिकाञ्जि पुरस्तात् सा कनीनका । स एव रूप-
१८ समृद्धः । अतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत । जवेन त्वेव समृद्धः स्यात् ॥ ४ ॥

तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति–राजपुत्राः कवचिन.

शतम् राजन्या निषङ्गिणः शतम् सूत्यामुण्या पुत्रा इषुधर्विणः शतम्[२३] क्षात्रसंग्रहीतृणां पुत्रा दण्डिनः शतम्—अश्वशतं निरष्टं निरमणं यदिम-श्रेनमपिसृज्य रक्षन्ति ॥ ५ ॥

अथ सावित्रीमिष्टिं निर्वपति—सवित्रे प्रसवित्रे द्वादशकपालं पुरोडा-[२४]शम्—सविता वै प्रसविता सविता मऽइमं यज्ञं प्रसुवादिति ॥ ६ ॥

तस्यै पञ्चदश सामिधेन्यो भवन्ति । वार्त्रघ्नावाज्यभागौ ।
*य इमा विश्वा जातानि [आ श्रावयति श्लोकेन ।  २७
प्र च सुवाति सविता ] ॥ ऋग्वेद ५. ८२. ९

आ देवो यातु सविता सुरत्नोऽ[ऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयंश्च प्रसुवंश्च भूम ॥ ऋग्वेद ७.४५.१.][३०]

इत्युपांशु हविषो याज्यानुवाक्ये । विराजौ संयाज्ये । हिरण्यं दक्षिणा सुवर्णं शतमानम् । तस्योक्तं ब्राह्मणम् ॥ ७ ॥

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रा-[३३]मुदाघ्नंस्त्रिः स्वयसंभृता गाथा गायति—'इति अयजत' 'इति अद-दात्' इति । तस्योक्तं ब्राह्मणम् ॥ ८ ॥

अथ द्वितीया निर्वपति—सवित्रऽआसवित्रे द्वादशकपालं पुरोडाशम्-[३६]सविता वाऽआसविता सविता मऽइमं यज्ञमासुवादिति ॥ ९ ॥

तस्यै सप्तदश सामिधेन्यो भवन्ति । सद्वन्तावाज्यभागौ । सदेवा-वरुन्द्धे ।  ३९

*विश्वानि देव सवितः [ दुरितानि परा सुव ।
यद्भद्रं तन्न आ सुव ] ॥ ऋग्वेद ५. ८२. ५.

* The accents of these quotations are shown according to the usual Rgveda method

४२ *स घा नो देवः सविता सहावा [ सांविषद्वसुपतिर्वसूनि ।
विश्रयमाणो अमतिमुरूचीं मर्तभोजनमध रासते नः ]॥ ऋग्वेद ७ ४५ ३

इत्युपांशु हविषो याज्यानुवाक्ये । अनुष्टुभौ सयाज्ये । रजतं हिरण्यं
४५ दक्षिणा नानारूपतायाऽअथोऽउत्क्रमायानपक्रमाय । शतमानं भवति
शतायुर्वै पुरुषः शतेन्द्रियः आयुरेवेन्द्रियं वीर्यमात्मन् धत्ते ॥ १० ॥

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरम-
४८ न्द्रामुदाघ्नस्तिस्र. स्वयंसभृता गाथा गायति–' इति अयजत ' ' इति
अददात् ' इति । तस्योक्त ब्राह्मणम् ॥ ११ ॥

अथ तृतीया निर्वपति-सवित्रे सत्यप्रसवाय द्वादशकपालं पुरोडाशम्-
५१ एष ह वै सत्यः प्रसवो यः सवितुः सत्येन मे प्रसवेनेम यज्ञ
प्रसुवादिति ॥ १२ ॥

तस्यै सप्तदशैव सामिधेन्यो भवन्ति । रयिमन्तावाज्यभागौ वीर्यं
५४ वै रयिर्वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्यै ।

*आ विश्वदेवं सत्पतिं [ सूक्तैरद्या वृणीमहे ।
सत्यसवं सवितारम् ]॥ ऋग्वेद ५ ८२ ७

५७ न प्रमिये सवितुर्दैव्यस्य तद् [ यथा विश्वं भुवनं धारयिष्यति ।
यत् पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन् दिवः सुवति सत्यमस्य तत् ]॥
ऋग्वेद ४. ५४. ४

६० इत्युपांशु हविषो याज्यानुवाक्ये । नित्ये संयाज्ये नेयज्ञपथादया-
नीति । क्लृप्तऽएव यज्ञेऽन्तत प्रतितिष्ठति । त्रिष्टुभौ भवतः इन्द्रे वै वीर्यं
त्रिष्टुभ् इन्द्रियस्यैव वीर्यस्यावरुद्ध्यै । हिरण्य दक्षिणा सुवर्णं शतमानम्
६३ तस्योक्त ब्राह्मणम् ॥ १३ ॥

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरम-

* The accents of these quotations are shown according to the usual Ṛgveda method

न्द्रामुदाशंस्तिस्रः स्वयंसंभृता गाथा गायति—‘ इति अयजत ’ ‘ इति अददात् ’ इति । तस्योक्तं ब्राह्मणम् ॥ १४ ॥ ६६

एतस्यां संस्थितायामुपोत्थायाध्वर्युश्च यजमानश्चाश्वस्य दक्षिणे कर्ण-आजपतः—विभूर्मात्रा प्रभूः पित्रा ( वा. सं. २२. १९ )—इति । तस्योक्तं ब्राह्मणम् । अथैनमुदञ्चं प्राञ्चं प्रसृजतः एषा ह्येतयोर्देव-६९ मनुष्याणां दिग् यदुदीची प्राची । स्वायामेवैनं तद्दिशि धत्तो न वै स्वऽआयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥

स आह । देवा आशापालाः एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षतेति । ७२ उक्ता मानुषा आशापालाः । अथैते दैवा आप्याः साध्या अन्वाध्या मरुतः । तमेतऽउभये देवमनुष्याः संविदाना अप्रत्यावर्तयन्तः सं सारं रक्षन्ति । तद्यं न प्रत्यावर्तयन्त्येष वाऽएष य एष तपति । क उ ह्येत-७५ मर्हति प्रत्यावर्तयितुम् । यद्ध्येनं प्रत्यावर्तयेयुः परागेवेदं सर्वं स्यात् । तस्मादप्रत्यावर्तयन्तो रक्षन्ति ॥ १६ ॥

स आह । आशापालाः ये वाऽएतस्योदृचं गमिष्यन्ति राष्ट्रं ते ७८ भविष्यन्ति राजानो भविष्यन्त्यभिषेचनीयाः । अथ यऽएतस्योदृचं न गमिष्यन्ति अराष्ट्रं ते भविष्यन्ति अराजानो भविष्यन्ति राजन्या विशोऽ-नभिषेचनीयाः । तस्मान्मा प्रमदत स्नात्वा चैवैनमुदकान्निरुन्धीध्वं ८१ वडवाभ्यश्च । ते यद्यद् ब्राह्मणजातमुपनिगच्छेत तत्तत् पृच्छेत-ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति । ते ये न विदुर्जिनीयात तान् । सर्वं वाऽअश्वमेधः सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद ८४ सोऽब्राह्मणो ज्येय एव । स पानं करवाथ ादं निनपाथ । अथ यत् किंच जनपदे कृतान्नं सर्वं वस्तात् सुतम् । तेषां रथकारकुलऽएव वो वसतिः तद्धि अश्वस्यायतनमिति ॥ १७ ॥ ८७



## No 8 K

Satapathabrahmana XIV iv 2 23 29

ब्रह्म वाऽइदमग्र आसीत् । एकमेव । तदेकं सन्न व्यभवत् । तच्छ्रेयो
रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः
३ पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्रात् परं नास्ति । तस्मा
द्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्रऽएव तद्यशो दधाति सैषा
क्षत्रस्य योनिर्यद्ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत
६ उपनिश्रयति स्वां योनिम् । य उ एनं हिनस्ति स्वां स योनिमृच्छति
स पापीयान् भवति यथा श्रेयांसं हिंसित्वा ॥ २३ ॥

स नैव व्यभवत् । स विशमसृजत । यान्येतानि देवजातानि गणश
९ आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ २४ ॥

स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणम् । इयं वै पूषेयं हीदं
सर्वं पुष्यति यदिदं किंच ॥ २५ ॥

१२ स नैव व्यभवत् । तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं
यद्धर्मस्तस्माद्धर्मात् परं नास्त्यथोऽअबलीयान् बलीयांसमाशंसते धर्मेण
यथा राज्ञैवम् । यो वै स धर्मः सत्यं वै तत् तस्मात् सत्यं वदन्तमाहुर्धर्मं
१५ वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ २६ ॥

तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु
क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोक-
१८ मिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवत् ॥ २७ ॥

अथ यो ह वाऽअस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो
न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतम् । यदि ह वाऽअप्य-
२१ नेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयतऽएवात्मानमेव
लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽ
स्माद्ध्येवात्मनो यद्यत् कामयते तत्तत् सृजते ॥ २८ ॥

अथोऽअय वाऽआत्मा । सर्वेषा भूताना लोक । स यज्जुहोति २६
यद्यजते तेन देवाना लोकोऽथ यदनुब्रूते तेनर्षीणामथ यत् प्रजामिच्छते
यत् पितृभ्यो निपृणाति तेन पितृणामथ यन्मनुष्यान् वासयते यदे-
भ्योऽशन ददाति तेन मनुष्याणामथ यत् पशुभ्यस्तृणोदक विन्दति तेन २७
पशूना यदस्य गृहेषु श्वापदा वयास्या पिपीलिकाभ्य उपजीवन्ति तेन तेषा
लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेव हैवविदे सर्वाणि भूता-
न्यरिष्टिमिच्छन्ति । तद्वाऽएतद्विदित मीमासितम् ॥ २९ ॥ ३०

## ✓ No 9

### Jaiminiyabrāhmaṇa I 125–127

(JAOS, xxviii pp 82 f)

देवासुरास्संयत्ता ज्योङ् न व्यजयन्त । बृहस्पतिर्देवाना पुरोहित
आसीदुशना काव्योऽसुराणाम् । तद्यद्देवावस्ताद्ब्रह्माक्रियत तत्परस्ताद-
क्रियत तत्समानं ब्रह्म न व्यजयत । तेषा ह त्रिशीर्षा गन्धर्वो विजयस्या- ३
वेत् । स हेट्टरास । तस्य हाप्स्वन्तर्नौनगर परिप्लवमास । तदिन्द्रोऽन्व-
बुद्ध्यत त्रिशीर्षा वै नौ विजयस्य वेदेति । तस्य जायामुपैच्यत् । एत-
स्यैव विजयस्य कामाय तामब्रवीत् पृच्छतात्पति य इमे देवासुरास्सयत्ता ६
ज्योगभूवन् कतर एषा जेष्यन्तीति । तद्धैव सपदमानावाजगाम ।
स ह तदेव नौमण्ड उपशिश्लेष जलायुका वा तृणक वा भूत्वा । सेय
पति पप्रच्छ य इमे देवासुरास्सयत्ता ज्योगभूवन् कतर एषा जेष्य- ९
न्तीति ॥ १२५ ॥

मौञ्चिरिति होवाच कर्णिनी वै भूमिरिति । तदिदमप्येतर्ह्याहुर्मौञ्चे -
कर्णिनी वै भूमिरिति । नेति होवाच ब्रूह्येवेति । स होवाच ब्राह्मणा- १२
विमौ सम विदतुर्बृहस्पतिरय देवेषूशना काव्योऽसुरेषु । तौ यत्कुरुतस्तत्सम-
मेव यच्छति । या इतर आहुतीर्जुहोति ता इतर. । तास्समेत्य यथाय-
थमेव पुनर्विपरायन्ति । तयोर्यतरो यतरानुपसमेष्यति ते जेष्यन्ति । तद्धैवे- १५
न्द्रोऽनुबुद्ध्य शुको भूत्वोत्पपात । त हान्वीक्ष्य पतन्तमुवाच येषामसौ

हरितवर्णव पतति ते जेयन्तीति । स हैशानस काव्यमाजगामासुरेषु।
१८ त होवाच ऋपे त्वमिम जन वर्धयस्यस्माक वै त्वमसि वय वा तवास्मा
नभ्युपावर्तस्वेति । कथेति होवाच केन मोपमन्त्रयस इति । या इमा
विरोचनस्य प्राल्हादे कामदुघास्ताभिरिति । ताभिर्ह प्रत्व (सा वे २
२१ २७ )इत्येव प्रदुद्रुवतु । तौ हासुरा अन्ववजिहिरे । तौ हान्वाजग्मु । स
होवाच ऋपे नु वै नाविमेऽसुरा अग्मन्निति । स वै तथा कुर्विति होवाच
यथा नावेते नान्वागच्छानिति । तौ हैतत्प्रतिपेदाते ॥ १२६ ॥

२४ स्वायुध पवते देव इन्दुरशस्तिहा वृजना रक्षमाण ।
पिता देवाना जनिता सुदक्षो विष्टम्भो दिवो धरुण पृथिव्या ॥
( सा वे २ २८ )

२७ इत्या दिवो विष्टम्भमुच्चिाश्रियतु । त हैवासुरा नातीयु । तौ
हाभि कामदुघाभिर्देवानाजग्मतु । तौ हागतौ महया चक्रिरे ।
ऋषिर्विप्र पुरएता जनानामृभुर्धीर उशना काव्येन ।
३० स चिद्विवेद निहित यदासामपीच्य गुह्य नाम गोनाम्॥(सा वे २ २९)

इति । ता एता पशव्या ऋचोव पशून् रुन्धे बहु-
पशुर्भवत्येताभिर्ऋग्भिस्तुष्टुवान । तास्वौशनम् । उशना वै काव्यो
३३ देवेष्वमर्त्यं गन्धर्वलोकमैच्छत । स एतत्सामापश्यत् तेनास्तुत ततो वै
स देवेष्वमर्त्यं गन्धर्वलोकमाश्नुत । तदेतल्लोकवित्सामाश्नुते देवेष्वमर्त्यं
गन्धर्वलोकमेतेन तुष्टुवान । यदुशना काव्योऽपश्यत्तस्मादौशन
३६ मित्याख्यायते ॥ १२७ ॥

## No 9 A ✓

Jaiminiyabrahmana I 154-155

देवा पितरो मनुष्यास्तेऽन्यत आसन्नसुरा रक्षासि पिशाचा अन्यत ।
त एषु लोकेष्वस्पर्धन्त । अथ ह कल्यो गन्धर्वा अन्तरथा चेरुर्नेत
३ गन्नेतरानाद्रियमाणा । ते देवा पितरो मनुष्या असुरा-रक्षासि पिशा

चानभ्यभवस्त इमाँल्लोकान्व्यभजन्त । देवलोकमेव देवा अभजन्त पितृ-लोकं पितरो मनुष्यलोकं मनुष्याः। तान्कलयो गन्धर्वा एत्याब्रुवन् अनु न एषु लोकेष्वाभजतेति । नेत्यब्रुवन् अनाद्रियमाणा वै यूयमचारिष्ट नेतरान्नेतरानाद्रियमाणा इति । अथो वै वो मनसान्वासिष्मह इत्यब्रुवन् । अन्वेव न आभजतेति । नेत्यब्रुवन् साधुविभक्ता नो लोकास्तान्न शक्ष्याम. संलोभयितुमिति । तेऽब्रुवन् यद्वयमिह स्वय पश्यामस्तदस्माकमस्त्विति । तेभ्य एताः कलिन्दाः प्रायच्छन् एतासु श्राम्यतेति । तद्यत्कलिभ्यः कलिन्दाः प्रायच्छस्तत्कलिन्दाना कलिन्दत्वम् । स एतत्कलिर्वैतदन्य. सामापश्यत्तेनास्तुत । तेनेममवान्तरदेशं दुर्यन्तं लोकमपश्यत्तमजयत् । तदेतल्लोकवित्साम । विन्दति लोकमेतेन तुष्टुवानो गन्धर्वलोकता ह त्वाव नातिजयति गन्धर्वलोकतामिवैव जयति । यदु कलिर्वैतदन्योऽपश्यत्तस्मात्कालेयमित्याख्यायते। १५

देवा वै पूर्वाभ्यां सवनाभ्यां तृतीयसवनं प्रवृह्य स्वर्गं लोकमायन् । त इमे लोका व्यवृहन्त वि यज्ञोऽवृहत । ते देवा अकामयन्त समिमाँल्लोकान्दध्याम सं यज्ञं दध्यामेति । त एतत्सामापश्यस्तेनास्तुवत तेनेमाँल्लोकान्समादधुः । तद्वा अस्य स्वर्ग्यं तेन गन्धर्वलोकतामतिजयति तरो वै यज्ञ स्तोमो विदद्वसु. । यज्ञेन च वाव ते तत्स्तोमेन चेमाँल्लोकान्समादधुः सं यज्ञमदधु । यज्ञेन वैव चास्य स्तोमेन च यज्ञः संहितो २१ भवतीमे च लोका य एवं वेद ।

सोमो ह खलु वै राजा कालेयम् । सदेवो हास्य यज्ञो भवति । यथा ह वा इद बद्धवत्सा हिंकरी तुरायति एवं ह वाव तमिन्द्रः सोममागच्छति २४ यस्मिन्कालेयेन स्तुवन्ति । तस्मादु हैतस्मात्साम्नो नेव कदा चनेयात् सैन्द्रो मे सदेवो यज्ञोऽसदिति । सैन्द्रमेवैतेन सदेवं यज्ञं कुरुते ॥ १५४-१५५ ॥ २७

No 9 B ✓ = 58.

Jaiminīyabrāhmaṇa II 438-440
(JAOS, xix, Second Half, pp 99 f)

[४३८] अथ ह वै पणयो नामासुरा देवाना गोरक्षा आसुः । ताभिरहापातस्थुः । ता ह रसाया निरध्य बलेनापि दधुः ॥ १ ॥

८ ते देवा अतिकृत्य लेपुः सुपर्णेमा नो गा अन्विच्छेति। तथेति। स हानुप्रपपात ॥ २ ॥

ता हान्वाजगाम रसायामन्तर्वलेनापिहिताः। तस्मै हान्वागताय बलिं
१० सर्पिः क्षीरमामिक्षा दधीत्येतदुपनिदधुः। तस्य ह सुहित आस। त होचुः सुपर्णैष एव ते बलिर्भविष्यत्येतदन्न मा नः प्रवोच इति ॥ ३ ॥

स ह पुनराप्पपात। त होचुः सुपर्णाविदो गा इति। का कीर्तिश्चिद्गवा-
१ मिति होवाच ॥ ४ ॥

एषैव कीर्तिर्गवामिति तस्य हेन्द्रो गल पीळयन्नुवाच गोष्वेवाह किल तवोपुषो मुखमिति। स ह दधिद्रप्स वामिक्षा वोद्वास। सोऽय
१२ बभूव योऽय वसन्ता भूतिक. प्रजायते ॥ ५ ॥

त ह तच्छशापाश्लीलजन्म ते जीवन भूयात् यो नो गा अनुविद्य ता न प्रावोच इति। तस्य हैतद्ग्रामस्य जघनार्धे यत्पापिष्ठं
१५ तज्जीवनम् ॥ ६ ॥

[४३९] ते सरमामब्रुवन् सरम इमा नस्त्व गा अन्विच्छेति। तथेति सा हानुप्रससार। सा ह रसामाजगाम ॥ १ ॥

१८ ता होवाच प्लोष्ये त्वा गाधा मे भविष्यसीति। प्लवस्व मेति होवाच न ते गाधा भविष्यामीति ॥ २ ॥

(8) सा हावाच्य कर्णौ प्रोष्यमाणा ससार। सा हेक्षाचक्रे कथ
२१ नु मा शुनी प्लवेत। हन्तास्यै गाधासानीति। ता होवाच मा मा प्लोष्ठाः गाधा ते भविष्यामीति। तथेति। तस्यै ह गाध आस। सा ह गाधेनातिससार ॥ ३ ॥

२४ ता हान्वाजगाम रसायामन्तर्वलेनापिहिताः। तस्यै हान्वागतायै तथैव सर्पिः क्षीरमामिक्षा दधीत्येतदुपनिदधुः ॥ ४ ॥

सा होवाच नाहमेतावदप्रिया देवानाम्। अविदं यद्वोऽश्रियाम्।
२७ त उ वै देवाना स्तेय कृत्वा चरथैतासां वा अह गवा पदवीरस्मि। न मा लापयिष्यध्वे नेन्द्रस्य गा उपहरिष्यध्व इति ॥ ५ ॥

सा हानाचिष्युपससाह । जराय्वपा तद्विवेद । तद्ध चखाद । तां
हैक उपजगौ । त्यमिव वै भ्रती सरमा जारु खादतीति । तदिदमप्ये- १०
तर्हि निवचन त्यमिव वै भ्रती सरमा जारु खादतीति । जरायु ह सा
तच्चखाद ॥ ६ ॥

सा ह पुनराससार । ता होचु सरमेऽविदो गा इति ॥ ७ ॥ १३

[४४०] अविदमिति होवाचेमा रसायामन्तर्वलेनापिहिता. । ता
यथामन्यध्वमेवमाजिहीर्षतेति ॥ १ ॥

ता हेन्द्र उवाच अन्नादीमरे ते सरमे प्रजा करोमि या नो १६
गा अन्वविद इति । ते हैते विदर्भेषु माचलास्सारमेया अपि ह शार्दू-
लान्मारयन्ति ॥ २ ॥

ते देवा एतमभिप्लव समभरन् । तेनाभ्यप्लुवन्त । तदभिप्लवस्या- १८
भिप्लवत्वम् ॥ ३ ॥

## No. 90

Jaiminīyabrahmana III. 18

शाक्त्यास्तरसपुरोडाशाः सत्रमासत । स गौरिवीति. शाक्त्यो
मृगमहन् । त तार्क्ष्य. सुपर्ण उपरिष्टादभ्यवापतत् । तस्मा उपमत्यधत्त ।
तमब्रवीत् ऋषे मा मेस्थ । श्वस्तन ते वक्ष्यामि । अद्य वाव त्वं ३
वेत्थ न श्व इति । तस्मा एतद्गौरिवीतमब्रवीत् । ततो वै स श्वस्तनम-
पश्यत् । तत्प्रजा वै श्वस्तन पशवः श्वस्तन स्वर्गो लोकः श्वस्तनम् ।
तद्यद्गौरिवीतं भवति एतस्यैव सर्वस्यावरुद्ध्या एतस्योपाप्त्यै । ६

वाचो वै रसोऽत्यक्षरत् । तद्गौरिवीतमभवत् । यदन्वह गौरिवीत
भवति अन्वहमेवैतद्वाचो रस दधतो यन्ति । ये गौरिवीतमहीनेऽवसृजेयु-
स्तान्ब्रूयादश्वस्तना अप्रजासो भविष्यथेति । अश्वस्तनो हैवाप्रजासो ९
भवन्ति ॥

## No. 9 D

Jaiminīyabrāhmaṇa III. 64
(*JAOS*, xviii, p 17)

दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास । त ह स्म यावन्तोऽसुरा परापश्यन्ति ते ह स्म तदेव विशीर्पाणश्शेरते । स उ ह स्वर्गं
3 लोकमुच्चकाम । स हेन्द्रो सुरैरश्विभिश्च चोढ उवाच क नु दध्यङ् भवतीति । तस्मै होचु स्वर्गं वै भगवस्सलोकमुदक्रामदिति । स होवाच नैवास्येह *किंचित्परिशिष्टमस्तीति । तस्मै होचुरासीदेवेदमश्वशीर्षं* येना-
6 श्विभ्या देवविद्या प्राब्रवीत् तत्तु न विद्म यत्रामवदिति। तद्वा अन्विच्छतेति । तद्धान्वीषु. । इच्छन्नश्वस्य यच्छिर पर्वतेष्वपश्रित तद्विदच्छर्यणावतीति ( सा वे २ २६४ = ऋ वे १ ८४ १४ )।
9 शर्यणावद्ध नामैतत्कुरुक्षेत्रस्य जघनार्धे सर । तदेतदनुविद्याजहुस्तस्मै *प्रायच्छन् । तद्ध स्मासुराणा प्रकाशे* धारयति । त ह स्म यावन्तोऽसुरा. परापश्यन्ति ते ह स्म तदेव *विशीर्पाणश्शेरते* ॥

## No 9 E

Jaiminīyabrāhmaṇa III 101

तद्ध एवाचक्षते साकमश्वमिति । कक्षीवान्प्रियमेधमपृच्छत् क इन्द्र इन्न *दिदीपे ३ प्रियमेधेति । तदस्य नामनुत । सोऽब्रवीत् प्रजा मे त्वा प्रति-*
3 ब्रवदिति । *अथ ह कक्षीवतो नाकुलिभस्त्रास प्रियङ्गुतण्डुलाना* वाधिकताना वा पूर्णा तासा ह स्म सवत्सरे सवत्सर एकैका प्रास्यति । तावद्धास्मा आयुर्दत्तमास । स उ ह नावम साकमश्व आजज्ञे प्रियमेधात् ।
6 सोऽकामयत उदित इया गातु प्रतिवचन विन्देयेति । स एतत्सामापश्यत् तदभ्यगायत तत प्रतिवचनमपश्यत् । *स कक्षीवन्तमभ्याद्रवत् तमब्रवी-* दाद्रवन्त द्रष्टा इमा मे भस्त्रामुदके प्रास्यत। इममह त पश्यामि यो मा
9 भत्युच्यातिप्रस्यतीति । अथ हैनमभ्यवजगाम । स होवाच य ऋच करोति न साम स इन्द्रो न दिदीपे अथ य ऋच च साम च करोति स

इन्द्रः सन् दिदीपे । एतत्त्वाहं प्रतिब्रवीमि एतन्मे पितैतत्पितामह एतत्प्र-
पितामह इत्या ह प्रियमेधाद्गणयांचकार । तदेतेजो ब्रह्मवर्चसं साम । १२
एतेन वै स पूर्वेषां पितामहानां पाप्मानमपाहन् । तेजस्वी ब्रह्मवर्चसी
भवति । अप पूर्वेषां पितामहानां पाप्मानं हते य एवं वेद । यद्ध साक-
मश्वोऽपश्यत्तस्मात् साकमश्वमित्याख्यायते ॥

## No. 9 F

Jaiminīyabrāhmaṇa III. 197

तासु जराबोधीयम् । शाक्त्यास्तरसपुरोडाशाः सत्रमासत । स गौरि-
वीतिः शाक्त्यो मृगमहं स्तं तार्क्ष्यः सुपर्ण उपरिष्टादभ्यववापतत् । तस्मा
उपपत्यधत्त तमब्रवीद्वये मा मेर्ष्यो यत्कामोऽसि तं ते कामं समर्धयि- ३
ष्याम इति । किंकामः खल्वहमस्मीत्यब्रवीत् । असितस्य धाम्न्यस्य
दुहितरं कामयसे तस्यै त्वा निवक्ष्यामीति । अथो हासितो धाम्न्य
ईर्ष्युरास । तस्य हान्तरिक्षे प्रासाद आस । तद्धास्य दुहितरं जुगुपुः । ६
तं ह स्म पत्रनाड्यामुपगुह्यास्यै कुमार्यै निवहति । तं ह
स्मैतेनैव साम्ना प्रातर्बोधयति जरा बुध्यस्वेति । तदेव जराबोधीयस्य
जराबोधीयत्वम् । सेयं कुमारी गर्भमाधत्त स कुमारोऽजायत । तमसुरा ९
विच्छिद्य परास्यन्तोऽब्रुवन् जामीगर्भो व अयम् रक्षो वा इदमजनीति ।
तमकामयत समेनमीरयेयमिति । स एतत्सामापश्यत् तेनैनं समैरयत् स
एव संकृतिर्गौरिवीतोऽभवत् । तदेतद्भेषज प्रायश्चित्तिः साम भेषजं वै १२
स तत्प्रायश्चित्तिमकुरुत ॥

## No. 10

Jaiminīyopaniṣadbrāhmaṇa III. 29

उच्चैःश्रवा ह कौपयेयः कौरव्यो राजाऽऽस । तस्य ह केशी
दार्भ्यः पाञ्चालो राजा स्वस्रीय आस । तौ हाऽन्योन्यस्य प्रिया-
वासतुः ॥ १ ॥ ३

स होच्चैःश्रवाः कौपयेयोऽस्माल्लोकात् प्रेयाय । तस्मिन् ह प्रेते
केशी दार्भ्योऽरण्ये मृगयां चचाराऽप्रियं विनिनीषमाणः ॥ २ ॥

९ स ह तथैव पल्ययमानो मृगान् प्रसरन्नन्तरेणैवोर्वैश्रवस कौपयेयम
भिजगाम ॥ ३ ॥

त होवाच दृप्यामि स्वीश्ज्ञानामीति । न दृप्यसीति होवाच
१ जानासि । स एवास्मि यम्मा मन्यस इति ॥ ४ ॥

*अथ यद्भगव आहुरिति होवाच य आविर्भवत्यन्येऽस्य लोकमुपय-*
न्तीत्यथ कथमशको म आविर्भवितुमिति ॥ ५ ॥

१२ ओमिति होवाच यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आवि-
रभूवमपि च चास्य विनेष्याम्यनु चैन शासिष्यामीति ॥ ६ ॥

तथा भगव इति होवाच । त वै नुत्वा परिष्वजा इति । त ह स्म
१५ परिष्वजमानो यथा धूम वापीयाद्वायु वाकाश वाग्न्यर्चि वाऽपो वैव ह
स्मैन व्येति । न ह स्मैनम्परिष्वङ्गायोपलभते ॥ ७ ॥

## No 11 ✗

### Aitareyāraṇyaka V iii 3

नादीक्षितो महाव्रत शसेन्नानग्नी न परस्मै नासवत्सर इत्येके ।
काम पित्रे वाऽऽचार्याय वा शसेदात्मनो हैवास्य तच्छस्त भवति ।

३ होतृशस्त्रेपूक्थशा यज सोमस्येत्येके प्रैष । स नाराशसेष्वनाराश-
सेषु वा होत्रकाणामुक्थशा यज सोमानामिति ।

तदिदमहर्नानन्तेवासिने प्रब्रूयान्नासवत्सरवासिने नो एवासवत्सरवासि-
६ ने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्राप्तायैत
देशम् ।

न भूय. सकृद्वदनाद्द्विर्वदनाद्वा द्यूयेव । एक एकस्मै प्रब्रूयादिति
९ ह स्माऽऽह जातूकर्ण्य. । न वत्से च न तृतीय इति ।

न तिष्ठस्तिष्ठते न व्रजन्व्रजते न शयान शयानाय नोपर्यासीन
उपर्यासीनायाथ एवाऽऽसीनोऽध आसीनाय ।

नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वोर्ध्वज्ञुरनपश्रितोऽधी- १२
यीत। न मांसं भुक्त्वा न लोहितं दृष्ट्वा न गतासुं नाव्रत्यमाक्रम्य नाक्त्वा
नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन कारयित्वा न स्नात्वा न
वर्णकेनानुलिप्य न स्रजमपिनह्य न स्त्रियमुपगम्य नोल्लिख्य नावलिख्य। १५

नेदमेकस्मिन्नहनि समापयेदिति ह स्माऽऽह जातूकर्ण्यः। समाप-
येदिति गालवो यदन्यत्प्राक्तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्यायनोऽ-
न्यमन्यस्मिन्देशे शमयमान इति। १८

यत्रेदमधीयीत न तत्रान्यदधीयीत यत्र त्वन्यदधीयीत काममिदं
तत्राधीयीत।

नेदमनधीयन्स्नातको भवति यद्यप्यन्यद्बह्वधीयांनैवेदमनधी- २१
यन्स्नातको भवति।

नास्मादधीतात्प्रमाद्येद्यद्यप्यन्यस्मात्प्रमाद्येन्नैवास्मात्प्रमाद्येत्। मो
एवास्मात्प्रमाद्येत्। अस्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात्। अल सत्य २४
विद्यात्। नेदंविदनिदंविदा समुद्दिशेन्न सहभुञ्जीत न सधमादी स्यात्।

अथातः स्वाध्यायधर्मं व्याख्यास्याम उप पुराणे नाऽऽपीते कक्षो-
दके पूर्वाह्णे न सभिन्नासु च्छायास्वपराह्णे नाप्यूह्ळे मेघेऽपर्तौ वर्षे २७
त्रिरात्रं वैदिकेनाध्यायेनान्तरियान्नास्मिन्कथा वदेत नास्य रात्री न
न च कीर्तयिषेत्।

तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यैतदेवं नाम ३०
वेद ब्रह्म भवति ब्रह्म भवति ॥

No. 12

**Taittirīyāraṇyaka II. x.**

पञ्च वा एते महायज्ञाः संतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः
पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति।

यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः संतिष्ठते। ३

यत्पितृभ्यः स्वधा करोत्यप्युपस्तत्पितृयज्ञः संतिष्ठते ।
यद्भूतेभ्यो बलिꣳ हरति तद्भूतयज्ञः संतिष्ठते ।
६ यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते ।
यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः संतिष्ठते ।
यदृचोऽधीते पयस. कूल्या अस्य पितॄन्स्वधा अभिवहन्ति यद्यजूꣳ-
९ ष्यपि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः
कूल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳसीर्मेदसः
कूल्या अस्य पितॄन्स्वधा अभिवहन्ति ।

१२ यदृचोऽधीते पयआहुतिभिरेव तद्देवाꣳस्तर्पयति यद्यजूꣳष्यपि घृताहु-
तिभिर्यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीति-
हासान्पुराणानि कल्पान्गाथा नाराशꣳसीर्मेदाहुतिभिरेव तद्देवाꣳस्तर्प-
१५ यति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेना-
न्नाद्येन च तर्पयन्ति ॥

 **No 12 A**

Taittiriyaranyaka V 1. 1-5

ॐ देवा वै सत्रमासत । ऋद्धिपरिमितं यशस्कामा. । तेऽब्रुवन् ।
यन्न. प्रथमं यश ऋच्छात् सर्वेषां नस्तत्सहासदिति । तेषां कुरुक्षेत्रं
३ वेदिरासीत् । तस्यै खाण्डवो दक्षिणार्ध आसीत् । तूर्घ्नमुत्तरार्ध॰ । परी-
णज्जघनार्ध. । मरव उत्कर (१)।

तेषां मखं वैष्णवं यश आर्च्छत् तन्न्यकामयत । तेनापाक्रामत् । तं
६ देवा अन्वायन् । यशोऽवरुरुत्समानाः । तस्यान्वागतस्य । सव्याद्धनुर-
जायत । दक्षिणादिषव. । तस्मादिषुधन्वं पुण्यजन्म । यज्ञजन्मा
हि (२)।

९ तमेकꣳ सन्तम् । बहवो नाभ्यधृष्णुवन् । तस्मादेकमिषुधन्विनम् ।
बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति । सोऽस्मयत । एकं मा सन्तं बहवो

नाभ्यधर्षिषुरिति । तस्य सिष्मियाणस्य तेजोऽपाक्रामत् । तद्देवा ओष-
धीषु न्यमृजुः । ते श्यामाका अभवन् । स्मयाका वै नामैते ( ३ )। १२

तत्स्मयाकानाꣳ स्मयाकत्वम् । तस्माद्दीक्षितेनापिगृह्य स्मेतव्यम् ।
तेजसो धृत्यै । स धनुः प्रतिष्कभ्यातिष्ठत् । ता उपदीका अब्रुवन्वर
वृणामहे । अथ व इमꣳ रन्धयाम । यत्र क्व च खनाम । तदपोऽभि- १५
तृणदामेति । तस्मादुपदीका यत्र क्व च खनन्ति । तदपोऽभितृ-
न्दन्ति ( ४ )।

वार्यं वृतꣳ ह्यासाम् । तस्य ज्यामप्यादन् । तस्य धनुर्विप्रवमाणꣳ १८
शिर उदवर्तयत् । तद्द्यावापृथिवी अनुप्रावर्तत । यत्प्रावर्तत । तत्प्रवर्ग्यस्य
प्रवर्ग्यत्वम् । यद्घ्राꣳ३ इत्यपतत् । तद्घर्मस्य घर्मत्वम् । महतो वीर्य-
मपप्तदिति । तन्महावीरस्य महावीरत्वम् ( ५ )। २१

## No 13

### Bṛhadāraṇyakopaniṣad I iii. 1-28

द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा
ज्यायसा असुराः । त एषु लोकेष्वस्पर्धन्त । ते ह देवा ऊचुः । हन्त
असुरान् यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥ ३

ते ह वाचमूचुः । त्वं न उद्गायेति । तथेति । तेभ्यो वागुदगायत् ।
यो वाचि भोगस्तं देवेभ्य आगायत् । यत् कल्याणं वदति तदात्मने ।
तेऽविदुः । अनेन वै न उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य पाप्मना- ६
विध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं वदति । स एव स
पाप्मा ॥ २ ॥

अथ ह प्राणमूचुः । त्वं न उद्गायेति । तथेति । तेभ्यः प्राण ९
उदगायत् । यः प्राणे भोगस्तं देवेभ्य आगायत् । यत् कल्याणं
जिघ्रति तदात्मने । तेऽविदुः । अनेन वै न उद्गात्रात्येष्यन्तीति । तम-

१२ भिद्रुत्य पाप्मनाविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति ।
स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुः । त्वं न उद्गायेति । तथेति । तेभ्यश्चक्षुरुदगा-
१५ यत् । यश्चक्षुषि भोगस्तं देवेभ्य आगायत् । यत् कल्याणं पश्यति
तदात्मने । तेऽविदुः । अनेन वै न उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य
पाप्मनाविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव
१८ स पाप्मा ॥ ४ ॥

अथ ह श्रोत्रमूचुः । त्वं न उद्गायेति । तथेति । तेभ्यः श्रोत्रमुद-
गायत् । यः श्रोत्रे भोगस्तं देवेभ्य आगायत् । यत् कल्याणं शृणोति
२१ तदात्मने । तेऽविदुः । अनेन वै न उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य
पाप्मनाविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं शृणोति । स एव
स पाप्मा ॥ ५ ॥

२४ अथ ह मन ऊचुः । त्वं न उद्गायेति । तथेति । तेभ्यो मन उद-
गायत् । यो मनसि भोगस्तं देवेभ्य आगायत् । यत् कल्याणं संकल्प-
यति तदात्मने । तेऽविदुः । अनेन वै उद्गात्रात्येष्यन्तीति । तमभिद्रुत्य
२७ पाप्मनाविध्यन् । स यः स पाप्मा यदेवेदमप्रतिरूपं संकल्पयति । स
एव स पाप्मा । एवमु खल्वेता देवताः पाप्मभिरुपासृजन् । एवमेनाः
पाप्मनाविध्यन् ॥ ६ ॥

३० अथ हेममासन्यं प्राणमूचुः । त्वं न उद्गायेति । तथेति । तेभ्य एष
प्राण उदगायत् । तेऽविदुः । अनेन वै न उद्गात्रात्येष्यन्तीति । तम-
भिद्रुत्य पाप्मनाविव्यत्सन् । स यथाश्मानमृत्वा लोष्टो विध्वंसेत एवं हैव
३३ विध्वंसमाना विश्वञ्चो विनेशुः । ततो देवा अभवन् परासुराः । भवत्या-
त्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

ते होचुः । क नु सोऽभूद्यो न इत्थमसक्तेति । अयमास्येऽन्तरिति ।
३६ सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥ ८ ॥

सा वा एषा देवता दूर्नाम । दूरं ह्यस्या मृत्युः । दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां ३१ दिशामन्तस्तद्गमयाचकार । तदासां पाप्मनो विन्यदधात् । तस्मान्न जनमियान्नान्तमियान्नेत् पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य अथैना मृत्यु- ४२ मत्यवहत् ॥ ११ ॥

स वै वाचमेव प्रथमामत्यवहत् । सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् । सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥ ४५

अथ प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्यत स वायुरभवत् । सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥

अथ चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् । ४८ सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

अथ श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवन् । ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥ ५१

अथ मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् । सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भाति । एवं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥ ५४

अथात्मनेऽन्नाद्यमागायत् । यद्धि किंचनान्नमद्यतेऽनेनैव तदद्यते । इह प्रतितिष्ठति ॥ १७ ॥

ते देवा अब्रुवन् । एतावद् वा इदं सर्वं यदन्नम् । तदात्मन ५७ आगासीः । अनु नोऽस्मिन्नन्न आभजस्वेति । ते वै माभिसंविशतेति । तथेति । तं समन्तं परिण्यविशन्त । तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्ति । एवं ह वा एनं स्वा अभिसंविशन्ति भर्ता स्वानां श्रेष्ठः ६०

पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद । य उ हैवंविदं स्वेषु प्रति प्रतिर्बुभूषति न हैवाल भार्येभ्यो भवति । अथ य एवैतमनु भवति यो ६३ वैतमनु भार्यान् बुभूर्षति स हैवाल भार्येभ्यो भवति ॥ १८ ॥

सोऽयास्य आङ्गिरसोऽङ्गाना हि रसः । प्राणो वा अङ्गाना रस. प्राणो हि वा अङ्गाना रस. । तस्माद्यस्मात् कस्माच्चाङ्गात् प्राण ६६ उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गाना रसः ॥ १९ ॥

एष उ एव बृहस्पतिः । वाग्वै बृहती । तस्या एष पतिस्तस्मादु बृहस्पति. ॥ २० ॥

६९ एष उ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म । तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

एष उ एव साम । वाग्वै साम । एष सा चामश्चेति । तत् साम्नः ७२ सामत्वम् । यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव साम । अश्नुते साम्नः सायुज्य सलोकता य एवमेतत् साम वेद ॥ २२ ॥

७५ एष उ वा उद्गीथः । प्राणो वा उत् प्राणेन हीद सर्वमुत्तब्धम् । वागेव गीथा । उच्च गीथा चेति स उद्गीथ ॥ २३ ॥

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजान भक्षयन्नुवाच । अयं त्यस्य ७८ राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥

तस्य हैतस्य साम्नो य. स्व वेद भवति हास्य स्वम् । तस्य वै ८१ स्वर एव स्वम् । तस्मादार्त्विज्य करिष्यन् वाचि स्वरमिच्छेत । तया वाचा स्वरसम्पन्नयार्त्विज्य कुर्यात् । तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाथो यस्य स्व भवति । भवति हास्य स्व य एवमेतत् साम्नः स्व ८४ वेद ॥ २५ ॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम् । तस्य वै स्वर एव सुवर्णम् । भवति हास्य सुवर्णं य एवमेतत् साम्नः सुवर्णं वेद ॥ २६ ॥ ८७

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति । तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत् प्राणः प्रतिष्ठितो गीयते । अन्न इत्यु हैक आहुः ॥ २७ ॥

अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति । स यत्र प्रस्तुयात् तदेतानि जपेत् । असतो मा सद् गमय । तमसो मा ज्योतिर्गमय । मृत्योर्माऽमृतं गमयेति । स यदाहासतो मा सद् गमयेति मृत्युर्वा असत् सदमृतम् । मृत्योर्माऽमृतं गमयामृतं मा कुरु । इत्येवैतदाह । तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतम् । मृत्योर्माऽमृतं गमयामृतं मा कुरु । इत्येवैतदाह । मृत्योर्माऽमृतं गमयेति । नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । तस्माद् तेषु वरं वृणीत यं कामं कामयेत तम् । स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति । तद्धैतल्लोकजिदेव । न हैवालोक्यताया आशास्ति य एवमेतत् साम वेद ॥ २८ ॥ ९० ९३ ९६ ९९

## No 13 A

Bṛhadāraṇyakopaniṣad V ix-xi

अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते । तस्यैष घोषो भवति यमेतत् कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ॥ १ ॥ ३

यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति । तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम् । तेन स ऊर्ध्व आक्रमते । स आदित्यमागच्छति । तस्मै स तत्र विजिहीते यथा लम्बरस्य खम् । तेन स ६

ऊर्ध्व आक्रमते । स चन्द्रमसमागच्छति । तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम् । तेन स ऊर्ध्व आक्रमते । स लोकमागच्छत्यशोकमहिम ९तस्मिन् वसति शाश्वतीः समाः ॥ १० ॥

एतद् वै परमं तपो यद् व्याधितस्तप्यते । परम हैव लोकं जयति य एवं वेद । एतद् वै परम तपो य प्रेतमरण्य हरन्ति । परम हैव १२लोकं जयति य एवं वेद । एतद् वै परमं तपो य प्रेतमग्नावभ्यादधति । परमं हैव लोकं जयति य एवं वेद ॥ ११ ॥

## No 14 

Chandogyopanisad III 1-v

असौ वा आदित्यो देवमधु । तस्य द्यौरेव तिरश्चीन वंशः । अन्तरिक्षमपूपः । मरीचयः पुत्राः ॥ १ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य ३प्राच्यो मधुनाड्यः । ऋच एव मधुकृतः । ऋग्वेद एव पुष्पम् । ता अमृता आप. । ता वा एता ऋचः—॥ २ ॥— एतमृग्वेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रिय वीर्यमन्नाद्य रसोऽजायत ॥ ३ ॥ तद् ६व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद् वा एतद् यदेतदादित्यस्य रोहितं रूपम् ॥ ४ ॥

इति तृतीयाध्यायस्य प्रथम. खण्ड. ।

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यः । ९यजूंष्येव मधुकृतः । यजुर्वेद एव पुष्पम् । ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य रसोऽजायत ॥ २ ॥ तद् व्यक्षरत् । तदादित्यम- १२भितोऽश्रयत् । तद् वा एतद् यदेतदादित्यस्य शुक्लं रूपम् ॥ ३ ॥

इति तृतीयाध्यायस्य द्वितीयः खण्डः ।

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः । सामान्येव मधुकृतः । सामवेद एव पुष्पम् । ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतं सामवेदमभ्यतपन् । तस्याभितप्तस्य यश- १५
स्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥ तद् व्यक्षरत् । तदा-
दित्यमभितोऽश्रयत् । तद् वा एतद् यदेतदादित्यस्य कृष्णं रूपम् ॥

इति तृतीयाध्यायस्य तृतीयः खण्डः ।

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यः । अथर्वाङ्गि- १८
रस एव मधुकृतः । इतिहासपुराणं पुष्पम् । ता अमृता आपः ॥ १ ॥
ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन् । तस्याभितप्तस्य यश-
स्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥ तद् व्यक्षरत् । तदा- २१
दित्यमभितोऽश्रयत् । तद् वा एतद् यदेतदादित्यस्य परं कृष्णं रूपम्
॥ ३ ॥

इति तृतीयाध्यायस्य चतुर्थः खण्डः ।

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यः । गुह्या एव
आदेशा मधुकृतः । ब्रह्मैव पुष्पम् । ता अमृता आपः ॥ १ ॥ ते वा २४
एते गुह्या आदेशा एतद् ब्रह्म अभ्यतपन् । तस्याभितप्तस्य यशस्तेज
इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥ तद् व्यक्षरत् । तदादित्यम-
भितोऽश्रयत् । तद् वा एतद् यदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥ २७
ते वा एते रसानां रसाः । वेदा हि रसास्तेषामेते रसाः । तानि वा
एतान्यमृतानाममृतानि । वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

इति तृतीयाध्यायस्य पञ्चमः खण्डः ।

## No 14 A

Chāndogyopaniṣad V xi-xviii

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः
शार्कराक्ष्यो बुडिल आश्वतराश्विः—ते हैते महाशाला महाश्रोत्रियाः
समेत्य मीमांसाञ्चक्रुः—को न आत्मा किं ब्रह्मेति ॥ १ ॥ ते ह संपा- ३
दयाञ्चक्रुः—उद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वा-
नरमध्येति । तं हन्ताभ्यागच्छाम—इति । तं हाभ्याजग्मुः ॥ २ ॥ स

९ ह संपादयांचकार—प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये । हन्ताहमन्यमभ्यनुशासानि—इति ॥ ३ ॥ तान् होवाच अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति।
९ तं हन्ताभ्यागच्छामः—इति । तं हाभ्याजग्मुः ॥ ४ ॥ तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार । स ह प्रातः संजिहान उवाच ।

न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
१२ नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ॥

यक्ष्यमाणो वै भगवन्तोऽहमस्मि । यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद् भगवद्भ्यो दास्यामि । वसन्तु भगवन्तः—इति ॥ ५ ॥
१५ ते होचुः । येन हैवार्थेन पुरुषश्चरेत्तं हैव वदेत् । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि । तमेव नो ब्रूहि—इति ॥ ६ ॥ तान् होवाच । प्रातर्वः प्रतिवक्तास्मि—इति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान्
१८ हानुपनीयैवैतदुवाच ॥ ७ ॥

इति पञ्चमाध्यायस्यैकादशः खण्डः ।

औपमन्यव कं त्वमात्मानमुपास्से—इति । दिवमेव भगवो राजन्—इति होवाच । एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से ।
२१ तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । मूर्धा त्वेष आत्मनः—इति होवाच । मूर्धा
२४ ते व्यपतिष्यद् यन्मां नागमिष्यः—इति ॥२॥

इति पञ्चमाध्यायस्य द्वादशः खण्डः ।

अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य कं त्वमात्मानमुपास्से—इति । आदित्यमेव भगवो राजन्—इति होवाच । एष वै
२७ विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात् तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥ प्रवृत्तोऽश्वतरीरथो दासीनिष्कः ।

अत्यन्न पश्यसि प्रियम् । अत्त्यन्न पश्यति प्रियम्, भवत्यस्य ब्रह्म-वर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । चक्षुष्ट्वेतदात्मनः— ३० इति होवाच । अन्धोऽभविष्यो यन्मां नागमिष्यः—इति ॥ २ ॥

इति पञ्चमाध्यायस्य त्रयोदशः खण्डः ।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य कं त्वमात्मान-मुपास्से-इति । वायुमेव भगवो राजन्–इति होवाच । एष वै पृथग्व- ३३ र्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात् त्वां पृथग्बलय आयन्ति । पृथग् रथश्रेणयोऽनुयन्ति ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं ३६ वैश्वानरमुपास्ते । प्राणस्त्वेष आत्मनः—इति होवाच । प्राणस्त उद्-क्रमिष्यद् यन्मां नागमिष्य. ॥ २ ॥

इति पञ्चमाध्यायस्य चतुर्दशः खण्ड ।

अथ होवाच जनम् । शार्कराक्ष्य कं त्वमात्मानमुपास्से–इति । ३९ आकाशमेव भगवो राजन्–इति होवाच । एष वै बहुल आत्मा वैश्वा-नरो यं त्वमात्मानमुपास्से । तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं पश्यति प्रियम्, भव- ४२ त्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । संदेहस्त्वेष आत्मनः—इति होवाच । संदेहस्ते व्यशीर्यद् यन्मां नागमिष्यः—इति ॥ २ ॥ ४५

इति पञ्चमाध्यायस्य पञ्चदशः खण्डः ।

अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य कं त्वमात्मान-मुपास्से—इति । अप एव भगवो राजन्—इति होवाच । एष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात् त्वं रयिमान् पुष्टि- ४८ मानसि ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । बस्ति-

प्नोति सर्वांश्च कामान्-इति । इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽ ६
सुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः
॥ २ ॥ तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापति-
रुवाच-किमिच्छन्तावबास्तम्-इति ॥ तौ होचतुः । य आत्मापहतपाप्मा ९
विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः-
सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वांश्च लोकानाप्नोति सर्वांश्च
कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते । १२
तमिच्छन्तावबास्तम्-इति ॥ ३ ॥ तौ ह प्रजापतिरुवाच । य एषोऽ-
क्षिणि पुरुषो दृश्यत एष आत्मा-इति होवाच । एतदमृतमभयमेतद् ब्रह्म-
इति । अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष-- १५
इति । एष उ एवैषु सर्वेष्वन्तेषु परिख्यायते-इति होवाच ॥ ४ ॥

इत्यष्टमाध्यायस्य सप्तमः खण्डः ।

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतम्--
इति । तौ होदशरावेऽवेक्षांचक्राते । तौ ह प्रजापतिरुवाच --किं १८
पश्यथ--इति । तौ होचतुः । सर्वमेवेदमावां भगव आत्मानं पश्याव
आ लोमभ्य आ नखेभ्यः प्रतिरूपम्--इति ॥ १ ॥ तौ ह प्रजापति-
रुवाच । साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथाम्--इति । २१
तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते । तौ
ह प्रजापतिरुवाच--किं पश्यथ--इति ॥ २ ॥ तौ होचतुः । यथै-
वेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः २४
साध्वलंकृतौ सुवसनौ परिष्कृतौ--इति । एष आत्मा--इति होवाच ।
एतदमृतमभयमेतद् ब्रह्म--इति । तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥
तौ हान्वीक्ष्य प्रजापतिरुवाच । अनुपलभ्यात्मानमननुविद्य व्रजतः । २७
यतर एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्ति--इति ।
स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम । तेभ्यो हैतामुपनिषदं
प्रोवाच । आत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं ३०

परिचरन्नुभौ लोकाववाप्नोतीमं चामुं च—इति ॥ ४ ॥ तस्मादप्यद्येहा-
ददानमश्रद्दधानमयजमानमाहुः—आसुरो बत—इति । असुराणा
३३ ह्येषोपनिषद् । प्रेतस्य शरीरं भिक्षया वसनेनालंकारणेति संस्कुर्वन्त्येतेन
ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

इत्यष्टमाध्यायस्याष्टमः खण्डः ।

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श । यथैव खल्वयमस्मिञ्शरीरे
३६ साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत
एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः । अस्यैव
शरीरस्य नाशमन्वेष नश्यति ॥१॥ नाहमत्र भोग्यं पश्यामीति स समित्पा-
३९ णिः पुनरेयाय । तं ह प्रजापतिरुवाच । मघवन् यच्छान्तहृदयः प्राव्राजीः
सार्धं विरोचनेन किमिच्छन् पुनरागमः—इति । स होवाच । यथैव खल्वय
भगवोऽस्मिञ्शरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः
४२ परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे
परिवृक्णः । अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्य
पश्यामीति ॥ २ ॥ एवमेवैष मघवन्—इति होवाच । एत त्वेव ते
४५ भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिंशत वर्षाणि—इति । स
हापराणि द्वात्रिंशत वर्षाण्युवास । तस्मै होवाच ॥ ३ ॥

इत्यष्टमाध्यायस्य नवमः खण्डः ।

य एष स्वप्ने महीयमानश्चरत्येष आत्मा—इति होवाच । एतद-
४८ मृतमभयमेतद् ब्रह्म—इति । स ह शान्तहृदयः प्रवव्राज । स हा-
प्राप्यैव देवानेतद् भय ददर्श । तद्यद्यपीद शरीरमन्धं भवत्यनन्धः स
भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥ न वधे-
५१ नास्य हन्यते नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनम्, विच्छादयन्तीव,
अप्रियवेत्तेव भवति, अपि रोदितीव । नाहमत्र भोग्यं पश्यामि—
इति ॥ २ ॥ स समित्पाणिः पुनरेयाय । तं ह प्रजापतिरुवाच ।
५४ मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागमः—इति । स

होवाच । तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनम्, विच्छादयन्तीव, अप्रियवेत्तेव ५७ भवति, अपि रोदितीव । नाहमत्र भोग्यं पश्यामि—इति । एवमेवैष मघवन्—इति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिंशतं वर्षाणि —इति । स हापराणि द्वात्रिंशतं वर्षाण्युवास । ६० तस्मै होवाच ॥ ४ ॥

इत्यष्टमाध्यायस्य दशमः खण्डः ।

तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा— इति होवाच । एतदमृतमभयमेतद् ब्रह्म इति । स ह शान्तहृदयः ६३ प्रवव्राज [स हाप्राप्यैव देवानेतद् भयं ददर्श । नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि—इति ॥ ] ॥ स समित्पाणिः ६६ पुनरेयाय । तं ह प्रजापतिरुवाच । मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागमः—इति । स होवाच । नाह खल्वयं भगव एवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि । विनाश- ६९ मेवापीतो भवति । नाहमत्र भोग्यं पश्यामि—इति ॥ २ ॥ एवमेवैष मघवन्—इति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । नो एवान्यत्रैतस्मात् । वसापराणि पञ्च वर्षाणि—इति । स हापराणि पञ्च वर्षा- ७२ ण्युवास । तान्येकशतं संपेदुः । एतद्यदाहुरेकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास । तस्मै होवाच ॥ ३ ॥

इत्यष्टमाध्यायस्यैकादशः खण्डः ।

मघवन् मर्त्यं वा इदं शरीरम् । आत्तं मृत्युना । तदस्यामृतस्याश- ७५ रीरस्यात्मनोऽधिष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥ अशरीरो वायुः । अभ्रं विद्युत् स्तनयित्नु- ७८

रशारीराण्येतानि । तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरु
सपद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥ एवमेवैष संप्रसादोऽस्माच्छ
८१ रीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स
उत्तम पुरुष । स तत्र पर्येति जक्षत् क्रीडन् रममाण स्त्रीभिर्वा या
नैर्वा ज्ञातिभिर्वा नोपजन स्मरन्निदं शरीरम् । स यथा प्रयोग्य आच
८४ रणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्त ॥ ३ ॥ अथ यत्रैतदा
काशमनुविषण्ण चक्षु स चाक्षुष पुरुष । दर्शनाय चक्षु । अथ
यो वेदेद जिघ्राणीति स आत्मा । गन्धाय घ्राणम् । अथ
८७ यो वेदेदमभिव्याहराणीति स आत्मा । अभिव्याहाराय वाक् ।
अथ यो वेदेद शृणवानीति स आत्मा । श्रवणाय श्रोत्रम् ॥ ४ ॥
अथ यो वेदेद मन्वानीति स आत्मा । मनोऽस्य दैव चक्षु । स वा
९० एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥ ५ ॥ य
एते ब्रह्मलोके त वा एत देवा आत्मानमुपासते । तस्मात्तेषा सर्वे च
लोका आत्ता सर्वे च कामा । स सर्वांश्च लोकानाप्नोति सर्वांश्च
९३ कामान् यस्तमात्मानमनुविद्य विजानाति—इति ह प्रजापतिरुवाच
प्रजापतिरुवाच ॥ ६ ॥

इत्यष्टमाध्यायस्य द्वादश खण्ड ।



## No 15

### Chagaleyopanisad

ऋषयो वै सरस्वत्या सत्रमासत । तेऽथ कवषमैलूष दास्या पुत्र
इति दीक्षायायाच्छिदन् । ते होचुरप वा एतदृग्यजुषादप साम्न इति ॥
३ स होवाच । भगवन्तो यदिद सत्रमाध्वे यदृचोऽधीध्वे यद्यजूषि यद्
सामानि कस्याय महिमेति । ते होचुर्ब्राह्मणा वाव स्मस्तेषामेवमिति ॥
स होवाच । यदिदमित्था माच्छिद्य[1] निर्दीक्षध्वे कि तयेन ब्राह्मणा

१ यदिदमिह्यचादिद्याचदृक्षिध्वे

इति । ते होचुर्यदिदमृग्यजुर्षैरेवोपवत्त (?)[2] नो जुहुवुर्यद्वैनमुपाघ्रासिपु- ६
र्यद्वुपानेपतैतद्ब्राह्मणा इति ॥

स ह अविदूर एव शवशयितमात्रेयमच्छावदमुपदर्शयन्नुवाच । यदि-
दमृग्यजुर्षैरुपवत्वं जुहो[पतो]पाघ्रासीदथोपानेद नैतदत्यगादिति । ९
किं तदिति होचुः ॥ स होवाच । नैमिषेऽमी शुनकाः सत्रमासत ।
तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयत् ययाज्या यदनुवाक्या यत्
प्रातरनुवाको यत् प्रउगं यदाज्यं यन्मरुत्वतीयमित्यथ यन्महावीरस-१२
भरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषावित्राणि[3]
यदौपयामानि[4] यदुपमन्त्रणान्यथ[5] यत् त्रिवृत् पञ्चदशः सप्तदश एक-
त्रिंश इति क्वास्य तदगादिति । ते हामुहन् ॥ अथैते सर्व एवोपसमे-१५
त्योचुरुप नो नयस्वेम एव त इति । स ह स्मयमान उवाच । संप-
श्यघ्वा एव मा प्रमदत । न होत्तमानधम उपनेतेति । ते होचुर्मैव स्मोप-
नथा गतिस्तु स्वमिदिति ॥ १८

स होवाच । कुरुक्षेत्र एवोपसमेत्य ये बालिशास्तानुपाध्वै । ते व
इदं प्रवक्ष्यन्तीति । ते ह तत एवोपसमेत्य कुरुक्षेत्रमुपजग्मुः ॥ ते ह
बालिशानेवोपासदन् । तानिम उपसीदत एव विदांचक्रुरितिकामुका २१
इति । ते होचुर्यत्किमिव बालिशानुपासदत महाशाला वै महाश्रोत्रिया
वर्षीयासः [सन्तः], यन्महाशाला महाश्रोत्रिया वर्षीयासः कुरुक्षेत्रम-
भ्यासत इति । ते हान्योन्यस्याभिसमीक्षामासुः ॥ ते हापश्यन्न ह्यम्मा-२४
न्मिथुनिदेवासाववोचद्बालिशानेव चैतान् विचक्षतेति[6] । ते होचुर्नमस्यान
तीव वचो रेतग्निष्वथ यद्नन्तर्नोऽसाविह प्राहैयात् (?) । अथैव तु स्मोप-
सन्ना अथानसूयवो यथोपश्राद्धिन इति । २७

---

२ परवोपवत्वमोजुहुवु
३ V L अभिषावित्राणि
४ यदौपयामानानि
५ यदर्मप्रमग्नानि
६ विचक्षमेति

ते होचु' किं वा अस्मत् प्रतीच्छथेति। ते होचु । नैमिषेऽमी
शुनकाः सत्रमासत। तेषामात्रेयोऽच्छावद सर्वाण्येवावर्तयत् यद्याग्ना
३० यदनुवाक्या यत् प्रातरनुवाको यत् प्रउग यदाज्य यन्मरुत्वतीयमित्यथ
यन्महावीरसभरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषा
वित्राणि यदौपयामानि यदुपमन्त्रणान्यथ' यत् निवृत् पञ्चदशः सप्तदश
३३ एकविं (?त्रिं) श इति। कास्य तदगाधदय शवशथितमशयिटेति॥
ते होचुर्न हासवत्सरवासिनामनुब्रूयादिति खलु न पूर्वेऽन्वशिषन् । यत्
सवत्सर वत्स्यथ अथ वेदिष्यथेति । ते ह सवत्सरमूषु ॥

३६ ततो ह बालिशा ऊचुरवात्त वा सवत्सरमिमे ब्राह्मणाः । हन्तै
षामनुब्रवामेति । ते ह गृहीत्वैवैनान् पथोऽभिरामीयु. ॥ ते ह सक्षीच्त
एव कूबरिणो रथचर्यामविन्दन्। ते होचु सपश्यथ्वामिति । कि हीति।
३९ कूबरिणमेव सौम्या इति। तथेति ॥ कथमिवेति। यथैवोपसृत्वरो वाधि
[स्ति] र्यगुल्ललन्तीभिरिव' वीचिभि 'शफरीभिरेवोपस्यन्दन्नुत्प्लवेदेव,
हैवैषोऽभिसृत्वराणामेव धुर्याणा चक्रमतामरिणा (') मुत्प्लवतीति।
४२ यथैवासौ प्रतिसृत्वरेण सम 'समेन क्रीटेदेव हैष सत्रीटतीति । यथै-
वासावितश्चेतोऽमुतश्चामुतश्च सपद्रवत इवोपशु (?षु)ष्यत इवोपस्यन्दमभि
गृह्णीताभिपातयेदेव हैष इतश्चेतश्चामुतश्च सपद्रवत इवोपशु (?षु) यत इवो-

स्पन्दते[६] । नेङ्गते न विवर्तते न च वीत इति ॥ ते ह बालिशा ऊर्चुर्य- ५१
दयमीदृगमूत् किमस्यापागादिति । तक्षैवेति ॥ तथैवैतत् सौम्या इति । ५
आत्मा वा अस्य प्रचोदयिता करणान्यश्वाः शिरा नद्धयोऽर्थान्युपग्रहा
असुगाञ्जनं कर्म प्रतोदो वाक्य काणनं त्वगुपनाह इति । स यथा प्रचोद-५४
यित्रापोज्झितो नेङ्गतेन रुरुर्वातैवं हैव प्राज्ञेनात्म[ना]पोज्झितो न ब्रूते न
चैत्यपि न श्वस(सि)त्यपि पूयत्यपि श्वान उपधावन्त्यपि काकाः पत-
न्त्यपि गृध्रा आस्कन्दन्त्यपि शिवा जिघत्सन्निति ॥ ते तत एव द्रागिव ५७
न्यज्ञासिषुः । ते ह पादयोरेवाभिमर्श्य बालिशानूचुः । न ह वाव नस्त-
येन निष्कुर्म इममेवेत्यञ्जलि कृत्वोपस्थिपतेत्याह भगवाञ्छागलेयस्त इमे
श्लोकाः— ६०

यथैतत् कूबरस्तक्ष्णापोज्झितो नेङ्गते मनाक् ।
परित्यक्तोपमात्मा(?)नस्तद्वद्देहो विरोचते ॥ १ ॥
यदस्य प्रधयश्चक्रा युगमक्षो वर(रु)त्रिका । ६३
प्रतोदश्चर्मकील ... ... ... ॥ २ ॥
... ... ... .. ।
.. ... .. . ॥ ३ ॥ ६६

## No 16

### Kenopanisad III and IV

ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्त । अस्माकमेवाय विजयोऽस्माकमेवायं महिमा—
इति ॥ १४ ॥ १ ॥ तद्धैषा विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न ३
व्यजानन्त किमिद यक्षमिति ॥ १५ ॥ २ ॥ तेऽग्निमब्रुवन् । जात-
वेदः, एतद्विजानीहि किमेतयक्षमिति । तथेति ॥ १६ ॥ ३ ॥ तदभ्य-
द्रवद् । तमभ्यवदत् कोऽसि इति । अग्निर्वा अहमस्मि— ६
इत्यब्रवीत्—जातवेदा वा अहमस्मीति ॥ १७ ॥ ४ ॥ तस्मिंस्त्वयि किं

६ स्तर्धेविशीभूध्रसादृने

वीर्यमिति । अपीद सर्व दहेय यदिद पृथिव्यामिति ॥ १८ ॥ ५ ॥
९ तस्मै तृण निदधौ । एतद् दह—इति । तदुप प्रेयाय सर्वजवेन । तन्न
शशाक दग्धुम् । स तत एव निववृते—नैतदशक विज्ञातु यदेतद्यक्ष
मिति ॥ १९ ॥ ६ ॥ अथ वायुमब्रुवन् । वायो, एतद् विजानीहि
१२ किमेतद्यक्षमिति । तथेति ॥ २० ॥ ७ ॥ तदभ्यद्रवत् । तमभ्यवदद्
कोसि—इति । वायुर्वा अहमस्मि—इत्यब्रवीत्—मातरिश्वा वा अहमस्मीति
॥ २१ ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्यमिति । अपीद सर्वमाददीय
१५ यदिद पृथिव्यामिति ॥ २२ ॥ ९ ॥ तस्मै तृण निदधौ । एतदादत्स्व-
इति । तदुप प्रेयाय सर्वजवेन । तन्न शशाकादातुम् । स तत
एव निववृते—नैतदशक विज्ञातु यदेतद्यक्षमिति ॥ २३ ॥ १० ॥ अथे
१८ न्द्रमब्रुवन् । मघवन्, एतद् विजानीहि किमेतद्यक्षमिति । तथेति ।
तदभ्यद्रवत् । तस्मात्तिरोदधे ॥ २४ ॥ ११ ॥ स तस्मिन्नेवाकाशे
स्त्रियमाजगाम बहु शोभमानामुमा हैमवतीम् । ता होवाच । किमे-
२१ तद्यक्षमिति ॥ २५ ॥ १२ ॥

इति तृतीय खण्ड ।

सा ब्रह्मेति होवाच । ब्रह्मणो वा एतद्विजये महीयध्वमिति । ततो
हैव विदाचकार ब्रह्मेति ॥ २६ ॥ १ ॥ तस्माद्वा एते देवा अतितरा
२४ मिवान्यान् देवान् यदग्निर्वायुरिन्द्र । ते ह्येनन्नेदिष्ट पस्पृशु । ते
ह्येनत् प्रथमो विदाचकार ब्रह्मेति ॥ २७ ॥ २ ॥ तस्माद्वा इन्द्रोऽति
तरामिवान्यान् देवान् । स ह्येनन्नेदिष्ठ पस्पर्श । स ह्येनत् प्रथमो विदा
२७ चकार ब्रह्मेति ॥ २८ ॥ ३ ॥ तस्यैष आदेशो यदेतद् विद्युतो
व्यद्युतद्—आ ३—इति । इन्न्यमीमिषद् -आ ३ इति । अधिदैवतम्
॥ २९ ॥ ४ ॥ अथाध्यात्मम् । यदेतद् गच्छतीव च मनोऽनेन
३० चैतदुपस्मरत्यभीक्ष्ण सकल्प ॥ ३० ॥ ५ ॥ तद्ध तद्वन नाम । तद्व-
नमित्युपासितव्यम् । स य एतदेव वेदाभि हैन सर्वाणि भूतानि सवा
ञ्छन्ति ॥ ३१ ॥ ६ ॥ उपनिषद भो ब्रूहि—इति । उक्ता त उप-

निषद् । ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ३२ ॥ ७ ॥ तस्यै तपो ११ दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि । सत्यमायतनम् ॥ ३३ ॥ ८ ॥ यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ३४ ॥ ९ ॥ १६

इति चतुर्थः खण्ड ।

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मोपनिषदम् । माहं ब्रह्म निराकुर्याम् । मा मा ब्रह्म निराकरोत् । अनिराकरणमस्तु । अनिराकरणमस्तु । तदा- १९ त्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु मयि सन्तु ॥ ॐ ॥ शान्तिः शान्तिः शान्तिः ।

## No 17

### Praśnopaniṣad I

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिः यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । १
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ।

ॐ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः— ते हैते ६ ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

तान् ह स ऋषिरुवाच । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं ९ संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्यामः—इति ॥ २ ॥

अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा १२ इमाः प्रजाः प्रजायन्ते—इति ॥ ३ ॥

तस्मै स होवाच । प्रजाकामो वै प्रजापतिः । स तपोऽतप्यत । स
१५ तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेति—एतौ मे बहुधा प्रजाः करिष्यतः—इति ॥ ४ ॥

आदित्यो ह वै प्राणः । रयिरेव चन्द्रमाः । रयिर्वा एतत् सर्वं
१८ यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयिः ॥ ५ ॥

अथादित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु संनिधत्ते । यद्दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो
२१ यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते ॥ ६ ॥

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्यु
२४ क्तम् ॥ ७ ॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

२७ संवत्सरो वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते । तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते ।
३० एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनम् । एतदमृतमभयम् । एतत् परायणम् ।
३३ एतस्मान्न पुनरावर्तन्ते—इति । एष निरोधः । तदेष श्लोकः ॥ १० ॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितम् । इति ॥ ११ ॥

३६ मासो वै प्रजापतिः । तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणः ।
तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्ति । इतर इतरस्मिन् ॥ १२ ॥

अहोरात्रो वै प्रजापतिः । तस्याहरेव प्राणः । रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद्यद्रात्रौ ७१ रत्या संयुज्यन्ते ॥ १३ ॥

अन्नं वै प्रजापतिः । ततो ह वै तद्रेतः । तस्मादिमाः प्रजाः प्रजायन्ते—इति ॥ १४ ॥ ७२

तद्ये ह वै तत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति॥१६॥ ७५

इति प्रथमः प्रश्नः ।

## No. 18

Mundakopanisad I. ii

तदेतत्सत्यम् ।

मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि ।
तान्याचरथ नियतं सत्यकामा एष वः पन्था सुकृतस्य लोके ॥ १ ॥
यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥ २ ॥
यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥
काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥
एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् ।
तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥५॥
एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥६॥

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यु ते पुनरेवापि यन्ति ॥ ७ ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा. ॥ ८ ॥
अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत् कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥ १० ॥
तप.श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥
परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥
तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

इति प्रथममुण्डके द्वितीय खण्ड ।

## No 18 A

Mundakopanisad III 1

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्य पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ॥ १ ॥
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥
प्राणो ह्येष य. सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥५॥
सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥
बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।
दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥
न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥
एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥
यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

इति तृतीयमुण्डके प्रथमः खण्डः ।

 **No. 19**

Kausītakyupanisad IV. 1-20

गार्ग्यो ह वै बालाकिरनूचानः संस्पृष्ट आस । सोऽयमुशीनरेषु संवसन् मत्स्येषु कुरुपञ्चालेषु काशीविदेहेष्विति । स ह जातशत्रुं काश्यमेत्योवाच—ब्रह्म ते ब्रवाणि—इति । तं होवाचाजातशत्रुः । सहस्रं दद्मस्ते । एतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥

स होवाच बालाकिः । य एवैष आदित्ये पुरुषस्तमेवाहमुपासे—इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । बृहन् पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेतमुपासे-इति । स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ २ ॥

स होवाच बालाकिः । य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । सोमो राजान्नस्य

१२ आत्मेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्तेऽन्नस्यात्मा
भवति ॥ ३ ॥

स होवाच बालाकिः । य एवैष विद्युति पुरुषस्तमेवाहमुपासे
१५ इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । तेजस आत्मेति
वा अहमेतमुपासे—इति । स यो हैतमेवमुपास्ते तेजस आत्मा भवति ॥४॥

स होवाच बालाकिः । य एवैष स्तनयित्नौ पुरुषस्तमेवाहमु
१८ पासे इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । शब्द
स्यात्मेति वा अहमेतमुपासे—इति । स यो हैतमेवमुपास्ते शब्दस्यात्मा
भवति ॥ ५ ॥

२१ स होवाच बालाकिः । य एवैष आकाशे पुरुषस्तमेवाहमुपासे इति ।
तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । पूर्णमप्रवर्ति ब्रह्मेति
वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिः ।
२४ नो एव स्वयं नास्य प्रजा पुरा कालात् प्रवर्तते ॥ ६ ॥

स होवाच बालाकिः । य एवैष आदर्शे पुरुषस्तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । प्रतिरूप इति वा अहमेतमुपासे-इति । स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजाया-३९ माजायते नाप्रतिरूपः ॥ १० ॥

स होवाच बालाकिः । य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः ।४२ द्वितीयोऽनपग इति वा अहमेतमुपासे-इति । स यो हैतमेवमुपास्ते विन्दते द्वितीयाद्, द्वितीयवान् भवति ॥ ११ ॥

स होवाच बालाकिः । य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपासे-४५ इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । असुरिति वा अहमेतमुपासे-इति । स यो हैतमेवमुपास्ते नो एव स्वयं नास्य ४८ प्रजा पुरा कालात् संमोहमेति ॥ १२ ॥

स होवाच बालाकिः । य एवैष छायायां पुरुषस्तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । मृत्युरिति वा अहमेतमुपासे- इति । स यो हैतमेवमुपास्ते नो एव स्वयं नास्य५१ प्रजा पुरा कालात् प्रमीयते ॥ १३ ॥

स होवाच बालाकिः । य एवैष शारीरः पुरुषस्तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । प्रजापति-५४ रिति वा अहमेतमुपासे-इति । स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १४ ॥

स होवाच बालाकिः । य एवैष प्राज्ञ आत्मा येनैतत्सुप्तः स्वप्न-५७ मान्चरति तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । यमो राजेति वा अहमेतमुपासे-इति । स यो हैतमेव-मुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥ ६०

स होवाच बालाकिः । य एवैष दक्षिणेऽक्षन् पुरुषस्तमेवाहमुपासे-इति । तं होवाचाजातशत्रुः । मा मैतस्मिन् संवादयिष्ठाः । नाम्न

६३ आत्माभेरात्मा ज्योतिष आत्मेति वा अहमेतमुपासे—इति । स यो हैत
मेवमुपास्ते एतेषां सर्वेषामात्मा भवति ॥ १६ ॥

स होवाच बालाकि । य एवैष सव्येऽक्षन् पुरुषस्तमेवाहमुपासे-
६६ इति । त होवाचाजातशत्रु । मा मैतस्मिन् सवादयिष्ठा । सत्यस्या
त्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपासे-इति । स यो
हैतमेवमुपास्त एतेषा सर्वेषामात्मा भवति ॥ १७ ॥

६९ तत उ ह बालाकिस्तूष्णीमास । त होवाचाजातशत्रु । एतावन्नु
बालाके-इति । एतावद्धीति होवाच बालाकि । त होवाचाजातशत्रु ।
मृषा वै किल मा समवदिष्ठा ब्रह्म ते ब्रवाणीति । यो वै बालाक एतेषा
७२ पुरुषाणा कर्ता यस्य वैतत्कर्म स वै वेदितव्य -इति । तत उ ह
बालाकि समित्पाणि प्रतिचक्राम-उपायानि इति । त होवाचाजातशत्रु ।
प्रतिलोमरूपमेव तत् स्याद् यत् क्षत्रियो ब्राह्मणमुपनयीत । एहि व्येव त्वा
७५ ज्ञपयिष्यामि इति । त ह पाणावभिपद्य प्रवव्राज । तौ ह सुप्त पुरुष-
मीयतु । त हाजातशत्रुरामन्त्रयाचक्रे । बृहन् पाण्डरवास सोम
राजन्-इति । स उ ह तूष्णीमेव शिश्ये । तत उ हैन यष्ट्या विचिक्षेप ।
७८ स तत एव समुत्तस्थौ । त होवाचाजातशत्रु । क्वैष एतद्बालाके
पुरुषोऽशयिष्ट । क्वैतदभूत् । कुत एतदागात्-इति । तदु ह बालाकिर्न
विजज्ञौ ॥ १८ ॥

८१ त होवाचाजातशत्रु । यत्रैष एतद्बालाके पुरुषोऽशयिष्ट, यत्रै-
तदभूद्, यत एतदागाद् इति- हिता नाम हृदयस्य नाड्यो हृदयात्
पुरीततमभिप्रतन्वन्ति । यथा सहस्रधा केशो विपाटितस्तावदण्व्य ।
८४ पिङ्गलस्याणिम्ना तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु
तदा भवति यदा सुप्त स्वप्न न कचन पश्यति । अथास्मिन् प्राण
एवैकधा भवति । तदैन वाक् सर्वैर्नामभि सहाप्येति । चक्षु सर्वै रूपै
८७ सहाप्येति । श्रोत्र सर्वै शब्दै सहाप्येति । मन सर्वैर्ध्यानैः सहाप्ये
ति । स यदा प्रतिबुध्यते—यथाग्नेर्ज्वलत सर्वा दिशो विस्फुलिङ्गा विप्र-

तिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवाः । देवेभ्यो लोकाः । यथा क्षुरः क्षुरधाने हितः स्याद् विश्वंभरो १० वा विश्वंभरकुलाये, एवमेवैष प्राज्ञ आत्मेदं शरीरमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः ॥ १९ ॥

तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः । १३ तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा श्रेष्ठिनं स्वा भुञ्जते, एवमेवैष प्राज्ञ आत्मैतैरात्मभिर्भुङ्क्ते । एवं वैतमात्मानमेत आत्मानोऽन्ववस्यन्ति । स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः । १६ स यदा विजज्ञावथ हत्वासुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय । तथो एवैवंविद्वान् सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥२०॥ २४

इति चतुर्थोऽध्यायः ।

## No. 20

### Aitareyopaniṣad I-III

हरिः ॐ । वाङ् मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान्त्सन्दधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । ३ तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । अवतु वक्तारम् ।

ॐ शान्तिः शान्तिः शान्तिः ।

ॐ आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किंचन मिषत् । स ६ ईक्षत । लोकान्नु सृजा इति ॥ १ ॥

स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापः, अदोऽम्भः परेण दिवम्, द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, पृथिवी मरः, या अधस्तात् ९ ता आपः ॥ २ ॥

स ईक्षत । इमे नु लोकाः, लोकपालान्नु सृजा इति । सोऽद्भ्य एव
१२ पुरुषं समुद्धृत्यामूर्छयत् ॥ ३ ॥

तमभ्यतपत् । तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम् । मुखा-
द्वाग् वाचोऽग्निः । नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुः ।
१५ अक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः । कर्णौ निरभिद्येतां
कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः । त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य
ओषधिवनस्पतयः । हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः ।
१८ नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः । शिश्नं निरभिद्यत
शिश्नाद्रेतो रेतस आपः ॥ ४ ॥

इत्यैतरेयोपनिषद्यात्मषट्के प्रथमः खण्डः ।

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन् । तमशनापिपा-
२१ साभ्यामन्ववार्जत् । ता एनमब्रुवन् । आयतनं नः प्रजानीहि यस्मिन्
प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

ताभ्यो गामानयत् । ता अब्रुवन् । न वै नोऽयमलमिति ॥ २ ॥
२४ ताभ्योऽश्वमानयत् । ता अब्रुवन् । न वै नोऽयमलमिति ॥ ३ ॥

ताभ्यः पुरुषमानयत् । ता अब्रुवन् । सुकृतं बतेति । पुरुषो वाव
सुकृतम् । ता अब्रवीत् । यथायतनं प्रविशतेति ॥ ४ ॥

२७ अग्निर्वाग् भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके
प्राविशत् । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत् । दिशः श्रोत्रं भूत्वा
कर्णौ प्राविशन् । ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् ।
३० चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्रावि-
शत् । आपो रेतो भूत्वा शिश्नं प्राविशन् ॥ ५ ॥

तमशनापिपासे अब्रूताम् । आवाभ्यामभिप्रजानीहीति । ते अब्र-
३३ वीत् । एतास्वेव वां देवतास्वाभजामि । एतासु भागिन्यौ करोमीति ।
तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे
भवतः ॥ ५ ॥

इत्यैतरेयोपनिषद्यात्मषट्के द्वितीयः खण्डः ।

स ईक्षत । इमे नु लोकाश्च लोकपालाश्च । अन्नमेभ्यः सृजा ३६
इति ॥ १ ॥

सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा ३९
मूर्तिरजायतान्नं वै तत् ॥ २ ॥

तदेनत्सृष्टं पराङत्यजिघांसत् । तद् वाचाजिघृक्षत् । तन्नाशक्नोद्
वाचा ग्रहीतुम् । स यद्धैनद् वाचाग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ४२
॥ ३ ॥

तत् प्राणेनाजिघृक्षत् । तन्नाशक्नोत् प्राणेन ग्रहीतुम् । स यद्धैनत्
प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥

तच्चक्षुषाजिघृक्षत् । तन्नाशक्नोच्चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षु ४५
षाग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥

तच्छ्रोत्रेणाजिघृक्षत् । तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् । स यद्धैन- ४८
च्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥

तत् त्वचाजिघृक्षत् । तन्नाशक्नोत् त्वचा ग्रहीतुम् । स यद्धैनत्त्व-
चाग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७ ॥

तन्मनसाजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मन-५१
साग्रहैष्यद् ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥

तच्छिश्नेनाजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छि-
श्नेनाग्रहैष्यद् विसृज्य हैवान्नमत्रप्स्यत् । तदपानेनाजिघृक्षत् । तदाव-५४
यत् । सैषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ॥ १० ॥

स ईक्षत । कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या
इति । स ईक्षत । यदि वाचाभिव्याहृतम्, यदि प्राणेनाभिप्राणितम्,५७
यदि चक्षुषा दृष्टम्, यदि श्रोत्रेण श्रुतम्, यदि त्वचा स्पृष्टम्, यदि

मनसा ध्यातम्, यद्यपानेनाभ्यापानितम्, यदि शिश्नेन विसृष्टम्, अथ
६० कोऽहमिति ॥ ११ ॥

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम
द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्नाः । अयमा-
६३ वसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥

स जातो भूतान्यभिव्यैख्यत् । किमिहान्यं वावदिषदिति । स एत-
मेव पुरुषं ब्रह्म ततमपश्यत् । इदमदर्शमिती३ ॥ १३ ॥

६६ तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रं सन्तमिन्द्र
इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि
देवाः ॥ १४ ॥

इत्यैतरेयोपनिषद्यात्मषट्के तृतीयः खण्डः ।



No 21

Taittirīyopaniṣad II 1–7

## अथ ब्रह्मानन्दवल्ली

हरिः ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु । मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः॥

ॐ ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता ।

सत्यं ज्ञानमनन्तं ब्रह्म ।
यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान् सह ।
ब्रह्मणा विपश्चिता । इति ॥

तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः ।
६ वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः ।
ओषधीभ्योऽन्नम् । अन्नात् पुरुषः । स वा एष पुरुषोऽन्नरसमयः ।
तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा ।
१२ इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

इति प्रथमः खण्डः ।

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीं श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नं हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । १५ अन्नं हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं १८ तदुच्यते । इति ।

एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । २१ आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येषः श्लोको भवति ॥ २ ॥

इति द्वितीय खण्डः ।

प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूता- नामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये २४ प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । इति ।

तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात् प्राण- २७ मयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजु- रेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । ३० अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ३ ॥

इति तृतीय खण्डः ।

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो ३३ विद्वान् । न बिभेति कदाचन । इति ।

तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनो- मयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष

३६ पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ४ ॥

इति चतुर्थः खण्डः ।

३९ विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुते ॥ इति ॥

४२ तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञान-मयात् । अन्योऽन्तर आत्मानन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रिय-

४५ मेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ५ ॥

इति पञ्चमः खण्ड. ।

असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् ।
४८ अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः ॥ इति ॥
तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः ।
उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती ३ ।
५१ आहो विद्वानमुं लोकं प्रेत्य । कश्चित् समश्नुता ३ उ ॥

सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्त-प्त्वा । इदं सर्वमसृजत । यदिदं किं च । तत् सृष्ट्वा । तदेवानुप्राविशत् ।

५४ तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किं च । तत् सत्यमित्याचक्षते । तदप्येष श्लोको

५७ भवति ॥ ६ ॥

इति षष्ठः खण्डः ।

असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुत । तस्मात् सुकृतमुच्यते । इति ।

यद्वै तत् सुकृतम् । रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति ॥

इति सप्तमः खण्डः ।

## No. 22 

### *Nirukta* I 12-18

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च ॥ १ ॥

तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ॥ २ ॥
न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ॥ ३ ॥

तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्, संविज्ञातानि तानि । यथा गौरश्वः पुरुषो हस्तीति ॥ ४ ॥

अथ चेत् सर्वाण्याख्यातजानि नामानि स्युः, यः कश्च तत् कर्म कुर्यात् सर्वं तत् सत्त्वं तथाचक्षीरन् । यः कश्चाध्वानमश्नुवीत, अश्वः स वचनीयः स्यात् । यत् किंचित् तृन्द्यात्, तृणं तत् ॥ ५ ॥

अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युः, यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् । तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ ६ ॥ १२ ॥

[इति यास्कप्रणीते निरुक्ते प्रथमाध्याये द्वादशः खण्डः ।]

अथापि य एषा न्यायवान् कार्मनामिक संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन् । पुरुष पुरिशय इत्याचक्षीरन्,
१५ अष्टेत्यश्वम्, तर्दनमिति तृणम् ॥ १ ॥

अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति। प्रथनात् पृथिवीत्याहु। क एनामप्रथयिष्यत् किमाधारश्चेति ॥ २ ॥

१८ अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्य पदेतरार्धान् सचस्कार शाकटायन । एते कारित च यकारादिं चान्तकरणमस्ते शुद्ध च सकारादिं च ॥ ३ ॥

२१ अथापि सत्त्वपूर्वो भाव इत्याहु । अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यते । इति ।

किमाधारश्चेति—अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः । अथाप्येवं ३६
सर्व एव दृष्टप्रवादा उपालभ्यन्ते ॥ ५ ॥

यथो एतत् पदेभ्यः पदेतरार्धान् सचस्कारेति—योऽनन्वितेऽर्थे सच-
स्कार स तेन गर्ह्यः । सैषा पुरुषगर्हा न शास्त्रगर्हा इति ॥ ६ ॥ ३९

यथो एतदपरस्माद् भावात् पूर्वस्य प्रदेशो नोपपद्यत इति—पश्यामः
पूर्वोत्पन्नाना सत्त्वानामपरस्माद् भावान्नामधेयप्रतिलम्भमेकेषा नैके-
षाम् । यथा बिल्वादो लम्बचूडक इति । बिल्व भरणाद्वा ४२
भेदनाद्वा ॥ ७ ॥ १४ ॥

[ इति यास्कप्रणीते निरुक्ते प्रथमाध्याये चतुर्दशः खण्ड । ]

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अर्थमप्रतियतो
नात्यन्त स्वरसंस्कारोद्देश । तदिद विद्यास्थान व्याकरणस्य कार्त्स्न्यं ४५
स्वार्थसाधक च ॥ १ ॥

यदि मन्त्रार्थप्रत्ययाय, अनर्थक भवतीति कौत्सः । अनर्थका हि
मन्त्राः ॥ २ ॥ ४८

तदेतेनोपेक्षितव्यम् ॥ ३ ॥

नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति ॥ ४ ॥

अथापि ब्राह्मणेन रूपसपन्ना विधीयन्ते । उरु प्रथस्वेति प्रथयति । ५१
प्रोहाणीति प्रोहति ॥ ५ ॥

अथाप्यनुपपन्नार्था भवन्ति । ओषधे त्रायस्वैनम्, स्वधिते मैन
हिंसी —इत्याह हिंसन् ॥ ६ ॥ ५४

अथापि विप्रतिषिद्धार्था भवन्ति । एक एव रुद्रोऽवतस्थे न द्वितीयः।
असख्याता सहस्राणि ये रुद्रा अधि भूम्याम् । अशत्रुरिन्द्र जज्ञिषे ।
शत सेना अजयत् साकमिन्द्र । इति ॥ ७ ॥ ५७

अथापि जानन्त संप्रेष्यति ।अग्नये समिध्यमानायानुब्रूहीति ॥ ८ ॥

अथाप्याह । अदिति सर्वमिति । अदितिर्द्यौरदितिरन्तरिक्षम् । तदु
६० परिष्टाद् व्याख्यास्याम ॥ ९ ॥

अथाप्यविस्पष्टार्था भवन्ति । अम्यक्, यादृश्मिन्, जारयायि, काणुका इति ॥ १० ॥ १५ ॥

[ इति यास्कप्रणीते निरुक्ते प्रथमाध्याये पञ्चदश खण्ड । ]

६१ अर्थवन्त शब्दसामान्यात् ॥ १ ॥

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृग् यजुर्वाभिवदतीति च ब्राह्मणम् ॥ २ ॥

६६ क्रीळन्तौ पुत्रैर्नप्तृभिरिति ॥ ३ ॥

यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति-लौकिकेष्वप्येतत् । यथा इन्द्राग्नी पितापुत्राविति ॥ ४ ॥

६९ यथो एतद् ब्राह्मणेन रूपसपन्ना विधीयन्त इति-उदितानुवाद स भवति ॥ ५ ॥

[ इति यास्कप्रणीते निरुक्ते प्रथमाध्याये षोडश खण्ड । ]

अथापीदमन्तरेण पदविभागो न विद्यते ॥ १ ॥

अवसाय पद्वते रुद्र मृड । इति पद्वदवस गाव पथ्यदनम् । अवतेर्गत्यर्थस्यासो नामकरण । तस्मान्नावगृह्णन्ति । अवसायाश्वान् । ८४ इति स्यतिरुपसृष्टो विमोचने । तस्मादवगृह्णन्ति ॥ २ ॥

दूतो निर्ऋत्या इदमाजगाम । इति पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वा आ कारान्तम् । परो निर्ऋत्या आचक्ष्व । इति चतुर्थ्यर्थ-८७ प्रेक्षैकारान्तम् ॥ ३ ॥

पर सनिकर्ष संहिता । पदप्रकृति संहिता । पदप्रकृतीनि सर्व-चरणाना पार्षदानि ॥ ४ ॥ ९०

*अथापि याज्ञे दैवतेन बहव प्रदेशा भवन्ति । तदेतेनोपेक्षितव्यम् ।* ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति । इन्द्र न त्वा शवसा देवता वायु पृणन्ति—इति वायुलिङ्ग चेन्द्रलिङ्ग चाग्नेये मन्त्रे । अग्निरिव मन्यो ९३ त्विषित सहस्व—इति तथाग्निर्मान्यवे मन्त्रे । त्विषितो ज्वलित । त्विषिरित्यप्यस्य दीप्तिनाम भवति ॥ ५ ॥ १७ ॥

[ इति यास्कप्रणीते निरुक्ते प्रथमाध्याये सप्तदश खण्ड । ]

अथापि ज्ञानप्रशसा भवति, अज्ञाननिन्दा च । ९६

स्थाणुरय भारहार किलाभूदधीत्य वेद न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकल भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥

यद् गृहीतमविज्ञात निगदेनैव शब्द्यते । ९९
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

स्थाणुस्तिष्ठते । अर्थोऽर्तेररणस्थो वा ॥ १ ॥ १८ ॥

[ इति यास्कप्रणीते निरुक्ते प्रथमाध्याये अष्टादश खण्ड: ]

## No 22 A

Nirukta VII 1-7

### दैवत काण्डम्।

अथ सप्तमोऽध्याय ।

अथातो दैवतम् ॥ १ ॥

तद्यानि नामानि प्राधान्यस्तुतीना देवताना तद्दैवतमित्याचक्षते ॥ २ ॥

३ सैषा देवतोपपरीक्षा ॥ ३ ॥

यत्काम ऋषिर्यस्या देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्देवत स मन्त्रो भवति ॥ ४ ॥

६ तास्त्रिविधा ऋच । परोक्षकृता प्रत्यक्षकृता आध्यात्मिक्यश्च ॥५॥

तत्र परोक्षकृता सर्वाभिर्नामविभक्तिभिर्युज्यन्ते, प्रथमपुरुषैश्चाख्यातस्य ॥ ६ ॥ १ ॥

[ इति यास्कप्रणीते निरुक्ते सप्तमाध्याये प्रथम खण्ड । ]

९ इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्या ( ऋग्वेद १० ८९ १० ) ।
इन्द्र॒मिद् गा॒थिनो॑ बृ॒हत् ( ऋग्वेद १ ७ १ ) ।
इन्द्रे॑णैते तृत्स॑वो वेवि॑षाणा ( ऋग्वेद ७ १८ १५ ) ।
१२ इन्द्रा॑य॒ साम॑ गायत ( ऋग्वेद ८ ९८ १ ) ।
नेन्द्रा॑दृ॒ते प॑वते॒ धाम॒ कि॒ञ्चन ( ऋग्वेद ९ ६९ ६ ) ।
इन्द्र॑स्य॒ नु वी॒र्याणि॒ प्र वो॑चम् ( ऋग्वेद १ ३२ १ ) ।
१५ इन्द्रे कामा अयसत । इति ॥ १ ॥
अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना ॥२॥
त्वमि॑न्द्र॒ बला॒दधि॑ ( ऋग्वेद १० १५३ २ ) ।
१८ वि न॑ इन्द्र॒ मृधो॑ जहि ( ऋग्वेद १० १५२ ४ ) । इति ॥ ३ ॥
अथापि प्रत्यक्षकृता स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि ।
मा चि॑द॒न्यद्वि श॑सत ( ऋग्वेद ८ १ १ ) ।

कण्वा अभि प्रगायत ( ऋग्वेद १. ३७. १ )। २१
उपप्रेत कुशिकाश्चेतयध्वम् ( ऋग्वेद ३. ५३. ११ ) । इति ॥४॥
अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना ॥५॥
यथैतदिन्द्रो वैकुण्ठो लवसूक्तं वागाम्भृणीयमिति ॥ ६ ॥ २ ॥ २४

[ इति यास्कप्रणीते निरुक्ते सप्तमाध्याये द्वितीयः खण्डः । ]

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिक्यः ॥१॥

अथापि स्तुतिरेव भवति नाशीर्वादः । इन्द्रस्य नु वीर्याणि प्रवोचम्-इति यथैतस्मिन् सूक्ते ( ऋग्वेद १. ३२ ) ॥ २ ॥ २७

अथाप्याशीरेव न स्तुतिः । सुचक्षा अहमक्षीभ्यां सुवर्चा मुखेन सुश्रुत् कर्णाभ्यां भूयासम्-इति । तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु ॥ ३ ॥ ३०

अथापि शपथाभिशापौ । अद्या मुरीय यदि यातुधानो अस्मि...। अधा स वीरैर्दशभिर्वियूयाः ... ... ( ऋग्वेद ७. १०४. १५ )। इति ॥ ४ ॥ ३३

अथापि कस्यचिद्भावस्याचिख्यासा । न मृत्युरासीदमृतं न तर्हि ( ऋग्वेद १०. १२९. २ ) । तम आसीत्तमसा गूळ्हमग्रे ( ऋग्वेद १०. १२९. ३ ) ॥ ५ ॥ ३६

अथापि परिदेवना कस्माच्चिद् भावात् । सुदेवो अद्य प्रपतेदनावृत् ( ऋग्वेद १०. ९५. १४ ) । न विजानामि यदि वेदमस्मि ( ऋग्वेद १. १६४. ३७ ) । इति ॥ ६ ॥ ३९

अथापि निन्दाप्रशंसे । केवलाघो भवति केवलादी ( ऋग्वेद १०. ११७. ६ ) । भोजस्येदं पुष्करिणीव वेश्म ( ऋग्वेद १०. १०७. १० ) । इति । एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च ॥ ७ ॥ ४२

एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति ॥ ८ ॥ ३ ॥

[ इति यास्कप्रणीते निरुक्ते सप्तमाध्याये तृतीयः खण्डः । ]

तयोऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा ॥ १ ॥

४५ यद्देवत स यज्ञो यज्ञाङ्ग वा तद्देवता भवन्ति ॥ २ ॥

अथान्यत्र यज्ञात् प्राजापत्य इति याज्ञिका ॥ ३ ॥

नाराशसा इति नैरुक्ता ॥ ४ ॥

४८ अपि वा सा कामदेवता स्यात् ॥ ५ ॥

प्रायोदेवता वा । अस्ति ह्याचारो बहुल लोके देवदेवत्यमतिथिदेवत्य पितृदेवत्यम् ॥ ६ ॥

५१ याज्ञदैवतो मन्त्र इत्यपि ह्यदेवता देवतावत् स्तूयन्ते यथा अश्वप्रभृतीन्योषधिपर्यन्तानि ॥ ७ ॥

अथाप्यष्टौ द्वन्द्वानि ॥ स न मन्येतागन्तूनिवार्थान् देवतानाम् । ५४ प्रत्यक्षदृश्यमेतद्भवति । माहाभाग्याद्देवताया एक एवात्मा बहुधा स्तूयते ॥ ८ ॥

एकस्यात्मनो अन्ये देवा प्रत्यङ्गानि भवन्ति ॥ ९ ॥

५७ अपि च सत्त्वाना प्रकृतिभूमभिर्ऋषय स्तुवन्तीत्याहु ॥ १० ॥

प्रकृतिसार्वनाम्याच्च ॥ ११ ॥

इतरेतरजन्मानो भवन्तीतरेतरप्रकृतय ॥ १२ ॥

६० कर्मजन्मान ॥ १३ ॥ आत्मजन्मान ॥ १४ ॥

आत्मैवैषा रथो भवति, आत्मा अश्व , आत्मा आयुधम्, आत्मा इषव , आत्मा सर्व देवस्य देवस्य ॥ १५ ॥ ४ ॥

[ इति यास्कप्रणीते निरुक्ते सप्तमाध्याये चतुर्थ खण्ड ।]

६३ तिस्र एव देवता इति नैरुक्ता ॥ १ ॥

अग्नि पृथिवीस्थान वायुर्वेन्द्रो वान्तरिक्षस्थान ,सूर्यो द्युस्थान ॥२॥

तासा माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति ॥३॥

६६ अपि वा कर्मपृथक्त्वात् । यथा होता अध्वर्यु ब्रह्मा उद्गाता इत्यप्येकस्यापि सत ॥ ४ ॥

अपि वा पृथगेव स्युः पृथगपि स्तुतयो भवन्ति ॥ ५ ॥

तथाभिधानानि ॥ ६ ॥ ६६

यथो एतत् कर्मपृथक्त्वादिति—बहवोऽपि विभज्य कर्माणि कुर्युः ॥ ७ ॥

तत्र सस्थानैकत्वं संभोगैकत्वं चोपेक्षणीयम् । यथा पृथिव्या ७२ मनुष्याः पशवो देवा इति स्थानैकत्वं च । संभोगैकत्वं च दृश्यते यथा पृथिव्याः पर्जन्येन वाय्वादित्याभ्यां च संभोगः, अग्निना च इतरस्य लोकस्य ॥ ८ ॥ ७५

तत्रैतन्नरराष्ट्रमिव ॥ ९ ॥ ५ ॥

[ इति यास्कप्रणीते निरुक्ते सप्तमाध्याये पञ्चमः खण्डः । ]

अथाकारचिन्तनं देवानाम् ॥ १ ॥

पुरुषविधाः स्युरित्येकम् ॥ २ ॥ ७८

चेतनावद्धि स्तुतयो भवन्ति ॥ ३ ॥ तथाभिधानानि ॥ ४ ॥

अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते । ऋष्वा त इन्द्र स्थविरस्य बाहू (ऋग्वेद ६ ४७ ८) । यत् संगृभ्णा मघवन् काशिरित्ते ८१ (ऋग्वेद ३ ३० ५) ॥ ५ ॥

अथापि पौरुषविधिकैर्द्रव्यसंयोगैः । आ द्वाभ्यां हरिभ्यामिन्द्र याहि (ऋग्वेद २ १८ ४) । कल्याणीर्जाया सुरणं गृहे ते ८४ (ऋग्वेद ३. ५३ ६) ॥ ६ ॥

अथापि पौरुषविधिकैः कर्मभिः । अद्धीन्द्र पिब च प्रस्थितस्य (ऋग्वेद १०. ११६ २) । आश्रुत्कर्ण श्रुधी हवम् (ऋग्वेद १ ८७ १० ९) ॥ ७ ॥ ६ ॥

[ इति यास्कप्रणीते निरुक्ते सप्तमाध्याये षष्ठः खण्डः । ]

अपुरुषविधाः स्युरित्यपरम् ॥ १ ॥

अपि तु यद् दृश्यते, अपुरुषविधं तत् । यथा अग्निर्वायुरादित्यः ९० पृथिवी चन्द्रमा इति ॥ २ ॥

यथो एतच्चेतनावद्धि स्तुतयो भवन्तीति—अचेतनान्यप्येवं स्तूयन्ते
१३ यथाक्षप्रभृतीन्योषधिपर्यन्तानि ॥ ३ ॥

यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इति—अचेतनेष्वप्येतद्
भवति । अभिक्रन्दन्ति हरितेभिरासभिः ( ऋग्वेद १०. ९४. २ )
१६ इति ग्रावस्तुतिः ॥ ४ ॥

यथो एतत् पौरुषविधिकैर्द्रव्यसंयोगैरिति—एतदपि तादृशमेव ।
सुखं रथं युयुजे सिन्धुरश्विनम् ( ऋग्वेद १०. ७५. ९ ) इति नदी-
१९ स्तुतिः ॥ ५ ॥

यथो एतत् पौरुषविधिकैः कर्मसंयोगैरिति—एतदपि तादृशमेव ।
होतुश्चित् पूर्वे हविरद्यमाशत ( ऋग्वेद १०. ९४. २ ) इति ग्राव-
२२ स्तुतिरेव ॥ ६ ॥

निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय इति । प्रधानं च षट्स्वङ्गेषु व्याकरणं प्रधाने च कृतो यत्नः फलवान् भवति ॥ लघ्वर्थं चाध्येयं व्याकरणम् । ब्राह्मणेनावश्यं शब्दा ज्ञेया इति । न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम् ॥ असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति । स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां संदेहः स्थूला चासौ पृषती च स्थूलपृषती स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति । यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः । अथान्तोदात्तत्वं ततस्तत्पुरुष इति ॥

इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि । तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्वन्ति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवो असि वरुणेति ॥

तेऽसुराः । तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः । तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः । म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् ॥ तेऽसुराः ॥

दुष्टः शब्दः ।

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति ॥

दुष्टाञ्शब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ॥ दुष्टः शब्दः ॥

यदधीतम् ।

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

तस्मादविज्ञातार्थमनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥ यदधीतम् ॥

यस्तु प्रयुङ्क्ते ।

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले ।

३३ सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥

कः । वाग्योगविदेव । कुत एतत् । यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्य ३६ धर्मः । अथवा भूयानधर्मः प्राप्नोति भूयांसोऽपशब्दा अल्पीयांसः शब्दाः । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा । गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयोऽपभ्रंशाः । अथ ३९ योऽवाग्योगवित् । अज्ञानं तस्य शरणम् ॥ विषम उपन्यासः । नात्यन्तायाज्ञानं शरणं भवितुमर्हति । यो ह्यजानन् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् । एवं तर्हि सोऽनन्तमा ४२ प्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः । कः । अवाग्योगविदेव । अथ यो वाग्योगवित् । विज्ञानं तस्य शरणम् ॥ क्व पुनरिदं पठितम् । भ्राजा नाम श्लोकाः । किं च भोः श्लोका अपि प्रमाणम् । किं ४५ चातः । यदि प्रमाणमयमपि श्लोकः प्रमाणं भवितुमर्हति ।

यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।
पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेदिति ॥

४८ प्रमत्तगीत एष तत्रभवतो यस्त्वप्रमत्तगीतस्तत्प्रमाणम् ॥यस्तु प्रयुङ्क्ते॥

अविद्वांसः ।

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।

५१ कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥
अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् ॥ अविद्वांसः ॥

विभक्तिं कुर्वन्ति । याज्ञिकाः पठन्ति । प्रयाजाः सविभक्तिकाः ५४ कार्या इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ॥ विभक्तिं कुर्वन्ति ॥

यो वा इमाम् । यो वा इमा पदशः स्वरशोऽक्षरशो वाच विदधाति स आर्त्विजीनः । आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणम् ॥५७
यो वा इमाम् ॥

चत्वारि ।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।६०
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेशेति ।

चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादास्त्रयः काला भूतभविष्यद्वर्तमानाः । द्वे शीर्षे द्वौ शब्दा-६३
त्मानौ नित्यः कार्यश्च । सप्त हस्तासो अस्य सप्त विभक्तयः । त्रिधा बद्धस्त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति । कुत एतत् । रौतिः शब्दकर्मा । महो देवो ६६
मर्त्याँ आविवेशेति । महान् देवः शब्दः । मर्त्या मरणधर्माणो मनुष्याः । ताना‌विवेश । महता देवेन नः साम्य यथा स्यादित्यध्येय व्याकरणम्॥

अपर आह । ६९

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीय वाचो मनुष्या वदन्ति ॥

चत्वारि वाक्परिमिता पदानि चत्वारि पदजातानि नामाख्यातोपस-७२
र्गनिपाताश्च । तानि विदुर्ब्राह्मणा ये मनीषिणः । मनस ईषिणो मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । गुहायां त्रीणि निहितानि नेङ्गयन्ति । न चेष्टन्ते । न निमिषन्तीत्यर्थः । तुरीयं वाचो मनुष्या ७५
वदन्ति । तुरीय ह वा एतद्वाचो यन्मनुष्येषु वर्तते । चतुर्थमित्यर्थः ॥
चत्वारि ॥

उत त्वः । ७८

उत त्व‍ः पश्यन्न ददर्श वाचमुत त्व‍ः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा. ॥

८३ अपि खल्वेकः पश्यन्नपि न पश्यति वाचम् । अपि खल्वेकः शृण्वन्नपि न शृणोत्येनाम् । अविद्वांसमाहार्धम् । उतो त्वस्मै तन्वं विसस्रे । तनुं विवृणुते । जायेव पत्य उशती सुवासाः । जायेव पत्ये कामय-
८४ माना सुवासाः स्वमात्मानं विवृणुत एवं वाग् वाग्विदे स्वात्मानं विवृणुते । वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् ॥ उत त्वः ॥

सक्तुमिव ।

८७ सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा विपरीताद्विकसितो भवति ।
९० तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा । धीरा ध्यानवन्तो मनसा प्रज्ञानेन वाचमक्रत वाचमकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सन्तः सख्यानि जानते । सायुज्यानि जानते । क ।
९३ य एष दुर्गो मार्ग एकगम्यो वाग्विषयः । के पुनस्ते । वैयाकरणाः । कुत एतत् । भद्रैषां लक्ष्मीर्निहिताधि वाचि । एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद्भासनात् परिवृढा भवति ॥
९६ सक्तुमिव ॥

सारस्वतीम् । याज्ञिकाः पठन्ति । आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति । प्रायश्चित्तीया मा भूमेत्यध्येयं
९९ व्याकरणम् ॥ सारस्वतीम् ॥

दशम्यां पुत्रस्य । याज्ञिकाः पठन्ति । दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरि-
२ प्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितमिति । न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ॥ दशम्यां पुत्रस्य ॥

३ सुदेवो असि ।

सुदेवो असि वरुण यस्य ते सप्त सिन्धव ।
अनुक्षरन्ति काकुद सूर्म्यं सुषिरामिव ॥

सुदेवो असि वरुण सत्यदेवो ऽसि यस्य ते सप्त सिन्धव सप्त ८
विभक्तयोऽनुक्षरन्ति काकुदम् । काकुद तालु । काकुर्जिह्वा सास्मि-
न्नुद्यत इति काकुदम् । सूर्म्यं सुषिरामिव । तद्यथा शोभनामूर्मिं सुषि-
रामग्निरन्त. प्रविश्य दहत्येव तव सप्त सिन्धव. सप्त विभक्तयस्ताल्व- ११
नुक्षरन्ति । तेनासि सत्यदेव । सत्यदेवा स्यामेत्यध्येय व्याकरणम् ॥
सुदेवो असि ॥

किं पुनरिद व्याकरणमेवाधिजिगास।नेभ्य प्रयोजनमन्वाख्यायते १४
न पुनरन्यदपि किंचित् । ओमित्युक्त्वा वृत्तान्तश शमित्येवमादीञ्छ-
ब्दान् पठन्ति ॥ पुराकल्प एतदासीत् । संस्कारोत्तरकाल ब्राह्मणा व्याक-
रण स्माधीयते । तेभ्यस्तत्र स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिका १७
शब्दा उपदिश्यन्ते । तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो
भवन्ति । |

वेदान्नो वैदिका शब्दा सिद्धा लोकाच्च लौकिका । २०

अनर्थक व्याकरणमिति । तेभ्य एव विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्य
आचार्य इद शास्त्रमन्वाचष्टे । इमानि प्रयोजनान्यध्येय व्याकरणमिति ॥ |

## No 23 A

Vyakaranamahabbāsya ( Kielhorn, 2nd edion 1892 )

Vol I p 7 line 26 to p 11 line 14

कथ पुनर्ज्ञायते सिद्ध शब्दोऽर्थ सम्बन्धश्चेति । लोकत ।
यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते नैषा निर्वृत्तौ यत्न कुर्वन्ति ।
ये पुन कार्या भावा निर्वृत्तौ तावत्तेषा यत्न क्रियते । तद्यथा । घटेन ३
कार्यं करिष्यन् कुम्भकारकुल गत्वाह कुरु घट कार्यमनेन करिष्यामीति ।
न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुल गत्वाह कुरु शब्दान् प्रयोक्ष्य

६ इति । तावत्येवार्थमर्थमुपादाय शब्दान् प्रयुञ्जते ॥ यदि तर्हि लोक एषु प्रमाण किं शास्त्रेण क्रियते ।

**लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो**

लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम क्रियते । ५ किमिदं धर्मनियम इति । धर्माय नियमो धर्मनियम. । धर्मार्थो वा नियमो धर्मनियम. । धर्मप्रयोजनो वा नियमो धर्मनियमः ।

